अगर्ववान् गर्ववान् भवतीति गर्वायते, गर्वायति ।

## ९ गर्वाय-धातोरूपाणि ॥ परस्मैपदे

१ **गर्वाय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **गर्वाये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **गर्वाय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ाणि, ाव, ाम ॥
४ **अगर्वाय**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **अगर्वाय्**-ईत्, इष्टाम्, इषुः, ईः, इष्टम्, इष्ट, इषम्, इष्व, इष्म ॥
६ **गर्वाया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **गर्वाय्या**-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **गर्वायिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **गर्वायिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अगर्वायिष्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

### आत्मनेपदे

१ **गर्वा**-यते, येते, यन्ते, यसे, येथे, यध्वे, ये, यावहे, यामहे ॥
२ **गर्वाये**-त, याताम्, रन्, थाः, याथाम्, ध्वम्, य, वहि, महि ॥ [ यध्वम्, यै, यावहै, यामहै ॥
३ **गर्वा**-यताम्, येताम्, यन्ताम्, यस्व, येथाम्,
४ **अगर्वा**-यत, येताम्, यन्त, यथाः, येथाम्, यध्वम्, ये, यावहि, यामहि ॥
५ **अगर्वायि**-ष्ट, षाताम्, षत, ष्ठाः, षाथाम्, इढ्वम्, ढ्वम्, ध्वम्, षि, ष्वहि, ष्महि ॥
६ **गर्वाया**-ञ्चक्रे, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **गर्वायिषी**-ष्ट, यास्ताम्, रन्, ष्ठाः, यास्थाम्, ढ्वम्, ध्वम्, य, वहि, महि ॥
८ **गर्वायिता**-", रौ, रः, से, साथे, ध्वे, हे, स्वहे, स्महे ॥
९ **गर्वायि**-ष्यते, ष्येते, ष्यन्ते, ष्यसे, ष्येथे, ष्यध्वे, ष्ये, ष्यावहे, ष्यामहे ॥
१० **अगर्वायि**-ष्यत, ष्येताम्, ष्यन्त, ष्यथाः, ष्येथाम्, ष्यध्वम्, ष्ये, ष्यावहि, ष्यामहि ॥

असुखी सुखी भवतीति सुखायते, सुखायति ।

## १० सुखाय-धातोरूपाणि ॥ परस्मैपदे

१ **सुखाय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **सुखाये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **सुखाय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **असुखाय**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **असुखाय्**-ईत्, इष्टाम्, इषुः, ईः, इष्टम्, इष्ट, इषम्, इष्व, इष्म ॥
६ **सुखाया**-ञ्चकार इ० ॥ म्बभूव इ० ॥ मास इ० ॥
७ **सुखाय्या**-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **सुखायिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **सुखायिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **असुखायिष्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

### आत्मनेपदे

१ **सुखा**-यते, येते, यन्ते, यसे, येथे, यध्वे, ये, यावहे, यामहे ॥
२ **सुखाये**-त, याताम्, रन्, थाः, याथाम्, ध्वम्, य, वहि, महि ॥ [ यै, यावहै, यामहै ॥
३ **सुखा**-यताम्, येताम्, यन्ताम्, यस्व, येथाम्, यध्वम्,
४ **असुखा**-यत, येताम्, यन्त, यथाः, येथाम्, यध्वम्, ये, यावहि, यामहि ॥
५ **असुखायि**-ष्ट, षाताम्, षत, ष्ठाः, षाथाम्, इढ्वम्, ढ्वम्, ध्वम्, षि, ष्वहि, ष्महि ॥
६ **सुखाया**-ञ्चक्रे, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **सुखायिषी**-ष्ट, यास्ताम्, रन्, ष्ठाः, यास्थाम्, ढ्वम्, ध्वम्, य, वहि, महि ॥
८ **सुखायिता**-", रौ, रः, से, साथे, ध्वे, हे, स्वहे, स्महे ॥
९ **सुखायि**-ष्यते, ष्येते, ष्यन्ते, ष्यसे, ष्येथे, ष्यध्वे, ष्ये, ष्यावहे, ष्यामहे ॥
१० **असुखायि**-ष्यत, ष्येताम्, ष्यन्त, ष्यथाः, ष्येथाम्, ष्यध्वम्, ष्ये, ष्यावहि, ष्यामहि ॥

अदुःखी दुखी भवतीति दुःखायते दुःखायति ।

## ११ दुःखाय–धातोरूपाणि ॥ परस्मैपदे

१ दुःखाय–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ दुःखाये–त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ दुःखाय–तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ अदुःखाय–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ अदुःखाय्–ईत्, इष्टाम्, इषुः, ईः, इष्टम्, इष्ट, इषम्, इष्व, इष्म ॥
६ दुःखाया–ञ्चकार, इ०॥ म्बभूव, इ०॥ मास, इ० ॥
७ दुःखाय्या–त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म॥
८ दुःखायिता–", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः॥
९ दुःखायिष्य–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० अदुःखायिष्य–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम॥

### आत्मनेपदे

१ दुःखा–यते, येते, यन्ते, यसे, येथे, यध्वे, ये, यावहे, यामहे॥
२ दुःखाये–त, याताम्, रन्, थाः, याथाम्, ध्वम्, य, वहि, महि ॥ [ यै, यावहै, यामहै ॥
३ दुःखा–यताम्, येताम्, यन्ताम्, यस्व, येथाम्, यध्वम्,
४ अदुःखा–यत, येताम्, यन्त, यथाः, येथाम्, यध्वम्, ये, यावहि, यामहि ॥
५ अदुखायि–ष्ट, षाताम्, षत, ष्ठाः, षाथाम्, इढ्वम्, ढ्वम्, ध्वम्, षि, ष्वहि, ष्महि ॥
६ दुःखाया–ञ्चक्रे, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ दुःखायिषी–ष्ट, यास्ताम्, रन्, ष्ठाः, यास्थाम्, ढ्वम्, ध्वम्, य, वहि, महि ॥
८ दुःखायिता–", रौ, रः, से, साथे, ध्वे, हे, स्वहे, स्महे॥
९ दुःखायि–ष्यते, ष्येते, ष्यन्ते, ष्यसे, ष्येथे, ष्यध्वे, ष्ये, ष्यावहे, ष्यामहे ॥
१० अदुःखायि–ष्यत, ष्येताम्, ष्यन्त, ष्यथाः, ष्येथाम्, ष्यध्वम्, ष्ये, ष्यावहि, ष्यामहि ॥

अमूर्छावान् मूर्छावान् भवतीति मूर्छायते, मूर्छायति ।

## १२ मूर्छाय–धातोरूपाणि ॥ परस्मैपदे

१ मूर्छाय–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः॥
२ मूर्छाये–त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ मूर्छाय–तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ अमूर्छाय–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ अमूर्छाय्–ईत्, इष्टाम्, इषुः, ईः, इष्टम्, इष्ट, इषम्, इष्व, इष्म ॥
६ मूर्छाया–ञ्चकार इ० ॥ म्बभूव इ० ॥ मास इ० ॥
७ मूर्छाय्या–त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ मूर्छायिता–", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ मूर्छायिष्य–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० अमूर्छायिष्य–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

### आत्मनेपदे

१ मूर्छा–यते, येते, यन्ते, यसे, येथे, यध्वे, ये, यावहे, यामहे ॥
२ मूर्छाये–त, याताम्, रन्, थाः, याथाम्, ध्वम्, य, वहि, महि ॥ [ यै, यावहै, यामहै ॥
३ मूर्छा–यताम्, येताम्, यन्ताम्, यस्व, येथाम्, यध्वम्,
४ अमूर्छा–यत, येताम्, यन्त, यथाः, येथाम्, यध्वम्, ये, यावहि, यामहि ॥
५ अमूर्छायि–ष्ट, षाताम्, षत, ष्ठाः, षाथाम्, इढ्वम्, ढ्वम्, ध्वम्, षि, ष्वहि, ष्महि ॥
६ मूर्छाया–ञ्चक्रे, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ मूर्छायिषी–ष्ट, यास्ताम्, रन्, ष्ठाः, यास्थाम्, ढ्वम्, ध्वम्, य, वहि, महि ॥
८ मूर्छायिता–", रौ, रः, से, साथे, ध्वे, हे, स्वहे, स्महे ॥
९ मूर्छायि–ष्यते, ष्येते, ष्यन्ते, ष्यसे, ष्येथे, ष्यध्वे, ष्ये, ष्यावहे, ष्यामहे ॥
१० अमूर्छायि–ष्यत, ष्येताम्, ष्यन्त, ष्यथाः, ष्येथाम्, ष्यध्वम्, ष्ये, ष्यावहि, ष्यामहि ॥

अनिद्रावान् निद्रावान् भवतीति निद्रायते । निद्रायति ।

## १३ निद्राय-धातोरूपाणि ॥ परस्मैपदे

१ **निद्राय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **निद्राये**-त्, ताम्, युः, ः, तम्, त, यम्, व, म ॥
३ **निद्राय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ाणि, ाव, ाम ॥
४ **अनिद्राय**-त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
५ **अनिद्राय्**-ईत्, इष्टाम्, इषुः, ईः, इष्टम्, इष्ट, इषम्, इष्व, इष्म ॥
६ **निद्राया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **निद्राय्या**-त्, स्ताम्, सुः, ः, स्तम्, स्त, सम्, स्व, स्म ॥
८ **निद्रायिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **निद्रायिष्य**-तिं, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अनिद्रायिष्य**-त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥

अकृपावान् कृपावान् भवतीति कृपायते, कृपायति ।

## १४ कृपाय-धातोरूपाणि ॥ परस्मैपदे

१ **कृपाय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **कृपाये**-त्, ताम्, युः, ः, तम्, त, यम्, व, म ॥
३ **कृपाय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ाणि, ाव, ाम ॥
४ **अकृपाय**-त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
५ **अकृपाय्**-ईत्, इष्टाम्, इषुः, ईः, इष्टम्, इष्ट, इषम्, इष्व, इष्म ॥
६ **कृपाया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **कृपाय्या**-त्, स्ताम्, सुः, ः, स्तम्, स्त, सम्, स्व, स्म ॥
८ **कृपायिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **कृपायिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अकृपायिष्य**-त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥

## आत्मनेपदे

१ **निद्रा**-यते, येते, यन्ते, यसे, येथे, यध्वे, ये, यावहे, यामहे ॥
२ **निद्राये**-त, याताम्, रन्, थाः, याथाम्, ध्वम्, य, वहि, महि ॥ [ यै, यावहै, यामहै ॥
३ **निद्रा**-यताम्, येताम्, यन्ताम्, यस्व, येथाम्, यध्वम्,
४ **अनिद्रा**-यत, येताम्, यन्त, यथाः, येथाम्, यध्वम्, ये, यावहि, यामहि ॥
५ **अनिद्रायि**-ष्ट, षाताम्, षत, ष्ठाः, षाथाम्, ड्ढ्वम्, ढ्वम्, ध्वम्, षि, ष्वहि, ष्महि ॥
६ **निद्रा**-ञ्चक्रे, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **निद्रायिषी**-ष्ट, यास्ताम्, रन्, ष्ठाः, यास्थाम्, ढ्वम्, ध्वम् य, वहि, महि ॥
८ **निद्रायिता**-", रौ, रः, से, साथे, ध्वे, हे, स्वहे, स्महे ॥
९ **निद्रायि**-ष्यते, ष्येते, ष्यन्ते, ष्यसे, ष्येथे, ष्यध्वे, ष्ये, ष्यावहे, ष्यामहे ॥
१० **अनिद्रायि**-ष्यत, ष्येताम्, ष्यन्त, ष्यथाः, ष्येथाम्, ष्यध्वम्, ष्ये, ष्यावहि, ष्यामहि ॥

## आत्मनेपदे

१ **कृपा**-यते, येते, यन्ते, यसे, येथे, यध्वे, ये, यावहे, यामहे ॥
२ **कृपाये**-त, याताम्, रन्, थाः, याथाम्, ध्वम्, य, वहि, महि ॥ [ यै, यावहै, यामहै ॥
३ **कृपा**-यताम्, येताम्, यन्ताम्, यस्व, येथाम्, यध्वम्,
४ **अकृपा**-यत, येताम्, यन्त, यथाः, येथाम्, यध्वम्, ये, यावहि, यामहि ॥
५ **अकृपायि**-ष्ट, षाताम्, षत, ष्ठाः, षाथाम्, ड्ढ्वम्, ढ्वम्, ध्वम्, षि, ष्वहि, ष्महि ॥
६ **कृपाया**-ञ्चक्रे, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **कृपायिषी**-ष्ट, यास्ताम्, रन्, ष्ठाः, यास्थाम्, ढ्वम्, ध्वम्, य, वहि, महि ॥
८ **कृपायिता**-", रौ, रः, से, साथे, ध्वे, हे, स्वहे, स्महे ॥
९ **कृपायि**-ष्यते, ष्येते, ष्यन्ते, ष्यसे, ष्येथे, ष्यध्वे, ष्ये, ष्यावहे, ष्यामहे ॥
१० **अकृपायि**-ष्यत, ष्येताम्, ष्यन्त, ष्यथाः, ष्येथाम्, ष्यध्वम्, ष्ये, ष्यावहि, ष्यामहि ॥

अकरुणावान् करुणावान् भवतीति करुणायते, करुणायति ।

## १५ करुणाय–धातोरूपाणि ॥ परस्मैपदे

१ **करुणाय**–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः॥
२ **करुणाये**–त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **करुणाय**–तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **अकरुणाय**–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम॥
५ **अकरुणाय्**–ईत्, इष्टाम्, इषुः, ईः, इष्टम्, इष्ट, इषम्, इष्व, इष्म ॥
६ **करुणाया**–ञ्चकार इ० ॥ म्बभूव इ० ॥ मास इ० ॥
७ **करुणाय्या**–त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म॥
८ **करुणायिता**–", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **करुणायिष्य**–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अकरुणायिष्य**–त्, ताम्, न्, :, तम्, त, म, ाव, ाम ॥

## आत्मनेपदे

१ **करुणा**–यते, येते, यन्ते, यसे, येथे, यध्वे, ये, यावहे, यामहे॥
२ **करुणाये**–त, याताम्, रन्, थाः, याथाम्, ध्वम्, य, वहि, महि ॥ [ यै, यावहै, यामहै ॥
३ **करुणा**–यताम्, येताम्, यन्ताम्, यस्व, येथाम्, यध्वम्,
४ **अकरुणा**–यत, येताम्, यन्त, यथाः, येथाम्, यध्वम्, ये, यावहि, यामहि ॥ [ढ्वम्, ध्वम्, षि, ष्वहि, ष्महि ॥
५ **अकरुणायि**–ष्ट, षाताम्, षत, ष्ठाः, षाथाम्, ड्ढ्वम्,
६ **करुणाया**–ञ्चक्रे, इ० ॥ म्बभूव, इ०॥ मास, इ० ॥
७ **करुणायिषी**–ष्ट, यास्ताम्, रन्, ष्ठाः, यास्थाम्, ढ्वम्, ध्वम्, य, वहि, महि ॥
८ **करुणायिता**–", रौ, रः, से, साथे, ध्वे, हे, स्वहे, स्महे॥
९ **करुणायि**–ष्यते, ष्येते, ष्यन्ते, ष्यसे, ष्येथे, ष्यध्वे, ष्ये, ष्यावहे, ष्यामहे ॥ [ष्यध्वम्, ष्ये, ष्यावहि, ष्यामहि ॥
१० **अकरुणायि**–ष्यत, ष्येताम्, ष्यन्त, ष्यथाः, ष्येथाम्,

मतान्तरे लोहितादिषु लोहितशब्दादेव क्यङ्ष्प्रत्ययो जिह्मादिभ्यस्तु क्यङ् एवेति तेषामात्मनेपदघटितान्येव रूपाणि भवन्ति ॥

इति क्यङ्ष्प्रत्ययान्ता नामधातवः ॥

इति श्रीमत्तपोगणगगनाङ्गणमगनमणि–सार्वसार्वज्ञशासनसार्वभौम–विद्यापीठादि-प्रस्थानपञ्चकसमाराधक–संविग्नशाखीय–आचार्यचूडामणि–अखण्डविजय-श्रीमद्गुरुराजविजयनेमिसूरीश्वरचरणेन्दिरामन्दिरेन्दिन्दिरायमाणेनान्ते-वासिना शास्त्रविशारदेन कविरत्नेन व्याकरणवास्पतिना महोपाध्याय-लावण्यविजयगणिना विरचितस्य धातुरत्नाकरस्य नामधातु-प्रक्रियानिरूपणे षष्ठभागे क्यङ्ष्प्रत्ययान्तप्रकरणम् सम्पूर्णम् ॥

# अथ णिङ्प्रत्ययान्तप्रकरणम् ॥

निरूपिताः क्यङ्ष्प्रत्ययान्ता नामधातवः। अथ णिङ्प्रत्ययान्ता नामधातवो निरूपणीयाः। ननु कीदृशान्नाम्नः कस्मिन्नर्थे णिङ् प्रत्ययो वा भवतीति चेल्लक्ष्यतामिदं लक्षणचतुष्टयम् ॥

## अङ्गान्निरसने णिङ् ॥ ३ । ४ । ३८ ॥

अङ्गवाचिनः शब्दात् कर्मणो निरसनेऽर्थे णिङ् प्रत्ययो वा भवति। हस्तौ निरस्यति हस्तयते। पादयते। ग्रीवयते। निरसन इति किम्? हस्तं करोति हस्तयति। कर्मण इति किम्? हस्तेन निरस्यति। ङकार आत्मनेपदार्थः ॥ ३८ ॥

## पुच्छादुत्परिव्यसने ॥ ३ । ४ । ३९ ॥

पुच्छशब्दात् कर्मण उदसने पर्यसने व्यसने असने चार्थे णिङ् प्रत्ययो वा भवति। पुच्छमुदस्यति उत्पुच्छयते। पर्यस्यते परिपुच्छयते। व्यस्यति विपुच्छयते अस्यति पुच्छयते ॥ ३९ ॥

## भाण्डात् समाचितौ ॥ ३ । ४ । ४० ॥

भाण्डशब्दात् कर्मणः समाचयनेऽर्थे णिङ् प्रत्ययो वा भवति। समाचयनं च समा परिणा च द्योत्यते। भाण्डानि समाचिनोति संभाण्डयते परिभाण्डयते ॥ ४० ॥

## चीवरात् परिधानार्जने ॥ ३ । ४ । ४१ ॥

चीवरशब्दात् कर्मणः परिधानेऽर्जने चार्थे णिङ् प्रत्ययो वा भवति। चीवरं परिधत्ते परिचीवरयते। समाच्छादनमपि परिधानम्। चीवरं समाच्छादयति संचीवरयते। चीवरमर्जयति चीवरयते। संमार्जनेऽप्यन्ये। चीवरं संमार्जयति संचीवरयते ॥ ४१ ॥

हस्तौ निरस्यतीति हस्तयते।

### १ हस्ति-धातोरूपाणि ॥

१ **हस्त**-यते, येते, यन्ते, यसे, येथे, यध्वे, ये, यावहे, यामहे ॥
२ **हस्तये**-त, याताम्, रन्, थाः, याथाम्, ध्वम्, य, वहि, महि ॥ [ यै, यावहै, यामहै ॥
३ **हस्त**-यताम्, येताम्, यन्ताम्, यस्व, येथाम्, यध्वम्,
४ **अहस्त**-यत, येताम्, यन्त, यथाः, येथाम्, यध्वम्, ये, यावहि, यामहि ॥ [ ध्वम्, षि, ष्वहि, ष्महि ॥
५ **अजहस्ति**-ष्ट, षाताम्, षत, ष्ठाः, षाथाम्, ड्ढ्वम्, ढ्वम्,
६ **हस्तया**-ञ्चक्रे, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **हस्तयिषी**-ष्ट, यास्ताम्, रन्, ष्ठाः, यास्थाम्, ढ्वम्, ध्वम्, य, वहि, महि ॥
८ **हस्तयिता**-'', रौ, रः, से, साथे, ध्वे, हे, स्वहे, स्महे ॥
९ **हस्तयि**-ष्यते, ष्येते, ष्यन्ते, ष्यसे, ष्येथे, ष्यध्वे, ष्ये, ष्यावहे, ष्यामहे ॥ [ ष्यध्वम्, ष्ये, ष्यावहि, ष्यामहि ॥
१० **अहस्तयि**-ष्यत, ष्येताम्, ष्यन्त, ष्यथाः, ष्येथाम्, क्रियारत्नसमुच्चयकृतामभिप्रायेण तु ङे परे अन्यस्य ॥४।१।८॥ इति अहतस्त्-इत्यपि भवति। अस्माभिस्तु अस्मिन् सूत्रे तादृशोदाहरणादर्शनादेकमेवादर्शि। एवमन्यत्र ॥

पादौ निरस्यतीति पादयते।

### २ पादि-धातोरूपाणि ॥

१ **पाद**-यते, येते, यन्ते, यसे, येथे, यध्वे, ये, यावहे, यामहे॥
२ **पादये**-त, याताम्, रन्, थाः, याथाम्, ध्वम्, य, वहि, महि ॥ [ यै, यावहै, यामहै ॥
३ **पाद**-यताम्, येताम्, यन्ताम्, यस्व, येथाम्, यध्वम्,
४ **अपाद**-यत, येताम्, यन्त, यथाः, येथाम्, यध्वम्, ये, यावहि, यामहि ॥
५ **अपपादि**-ष्ट, षाताम्, षत, ष्ठाः, षाथाम्, ड्ढ्वम्, ढ्वम्, ध्वम्, षि, ष्वहि, ष्महि ॥
६ **पादया**-ञ्चक्रे, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **पादयिषी**-ष्ट, यास्ताम्, रन्, ष्ठाः, यास्थाम्, ढ्वम्, ध्वम्, य, वहि, महि ॥
८ **पादयिता**-'', रौ, रः, से, साथे, ध्वे, हे, स्वहे, स्महे ॥
९ **पादयि**-ष्यते, ष्येते, ष्यन्ते, ष्यसे, ष्येथे, ष्यध्वे, ष्ये, ष्यावहे, ष्यामहे ॥ [ ष्यध्वम्, ष्ये, ष्यावहि, ष्यामहि ॥
१० **अपादयि**-ष्यत, ष्येताम्, ष्यन्त, ष्यथाः, ष्येथाम्,

ग्रीवां निरस्यतीति ग्रीवयते ।

## ३ ग्रीवि-धातोरूपाणि ॥

१ **ग्रीव**-यते, येते, यन्ते, यसे, येथे, यध्वे, ये, यावहे, यामहे ॥
२ **ग्रीवये**-त, याताम्, रन्, थाः, याथाम्, ध्वम्, य, वहि, महि ॥
३ **ग्रीव**-यताम्, येताम्, यन्ताम्, यस्व, येथाम्, यध्वम्, यै, यावहै यामहै ॥
४ **अग्रीव**-यत, येताम्, यन्त, यथाः, येथाम्, यध्वम्, ये, यावहि, यामहि ॥
५ **अजिग्रीव्**-अत, एताम्, अन्त, अथाः, एथाम्, अध्वम्, ए, आवहि, आमहि ॥
६ **ग्रीवया**-ञ्चक्रे, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **ग्रीवयिषी**-ष्ट, यास्ताम्, रन्, ष्ठाः, यास्थाम्, ढ्वम्, ध्वम्, य, वहि, महि ॥
८ **ग्रीवयिता**-", रौ, रः, से, साथे, ध्वे, हे, स्वहे, स्महे ॥
९ **ग्रीवयि**-ष्यते, ष्येते, ष्यन्ते, ष्यसे, ष्येथे, ष्यध्वे, ष्ये, ष्यावहे, ष्यामहे ॥ [ ष्यध्वम्, ष्ये, ष्यावहि, ष्यामहि ॥
१० **अग्रीवयि**-ष्यत, ष्येताम्, ष्यन्त, ष्यथाः, ष्येथाम्.

पुच्छं पर्यस्यतीति परिपुच्छयते ।

## ४ परि-पुच्छि-धातोरूपाणि ॥

१ **परिपुच्छ**-यते, येते, यन्ते, यसे, येथे, यध्वे, ये, यावहे, यामहे ॥
२ **परिपुच्छये**-त, याताम्, रन्, थाः, याथाम्, ध्वम्, य, वहि, महि ॥ [यध्वम्, यै, यावहै, यामहै ॥
३ **परिपुच्छ**-यताम्, येताम्, यन्ताम्, यस्व, येथाम्,
४ **पर्यपुच्छ**-यत, येताम्, यन्त, यथाः, येथाम्, यध्वम्, ये, यावहि, यामहि ॥
५ **पर्यपुपुच्छ्**-अत, एताम्, अन्त, अथाः, एथाम्, अध्वम्, ए, आवहि, आमहि ॥
६ **परिपुच्छया**-ञ्चक्रे, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **परिपुच्छयिषी**-ष्ट, यास्ताम्, रन्, ष्ठाः, यास्थाम्, ढ्वम्, ध्वम्, य, वहि, महि ॥
८ **परिपुच्छयिता**-", रौ, रः, से, साथे, ध्वे, हे, स्वहे, स्महे ॥
९ **परिपुच्छयि**-ष्यते, ष्येते, ष्यन्ते, ष्यसे, ष्येथे, ष्यध्वे, ष्ये, ष्यावहे, ष्यामहे ॥ [ष्यध्वम्, ष्ये, ष्यावहि, ष्यामहि ॥
१० **पर्यपुच्छयि**-ष्यत, ष्येताम्, ष्यन्त, ष्यथाः, ष्येथाम्,

पुच्छं व्यस्यतीति विपुच्छयते ।

## ५ वि-पुच्छि-धातोरूपाणि ॥

१ **विपुच्छ**-यते, येते, यन्ते, यसे, येथे, यध्वे, ये, यावहे, यामहे ॥
२ **विपुच्छये**-त, याताम्, रन्, थाः, याथाम्, ध्वम्, य, वहि, महि ॥ [यध्वम्, यै, यावहै, यामहै ॥
३ **विपुच्छ**-यताम्, येताम्, यन्ताम्, यस्व, येथाम्,
४ **व्यपुच्छ**-यत, येताम्, यन्त, यथाः, येथाम्, यध्वम्, ये, यावहि, यामहि ॥
५ **व्यपुपुच्छ्**-अत, एताम्, अन्त, अथाः, एथाम्, अध्वम्, ए, आवहि, आमहि ॥
६ **विपुच्छया**-ञ्चक्रे, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **विपुच्छयिषी**-ष्ट, यास्ताम्, रन्, ष्ठाः, यास्थाम्, ढ्वम्, ध्वम् य, वहि, महि ॥
८ **विपुच्छयिता**-", रौ, रः, से, साथे, ध्वे, हे, स्वहे, स्महे ॥
९ **विपुच्छयि**-ष्यते, ष्येते, ष्यन्ते, ष्यसे, ष्येथे, ष्यध्वे, ष्ये, ष्यावहे, ष्यामहे ॥
१० **व्यपुच्छयि**-ष्यत, ष्येताम्, ष्यन्त, ष्यथाः, ष्येथाम्, ष्यध्वम्, ष्ये, ष्यावहि, ष्यामहि ॥

पुच्छमस्यतीति पुच्छयते ।

## ६ पुच्छि-धातोरूपाणि ॥

१ **पुच्छ**-यते, येते, यन्ते, यसे, येथे, यध्वे, ये, यावहे, यामहे ॥
२ **पुच्छये**-त, याताम्, रन्, थाः, याथाम्, ध्वम्, य, वहि, महि ॥ [ यै, यावहै, यामहै ॥
३ **पुच्छ**-यताम्, येताम्, यन्ताम्, यस्व, येथाम्, यध्वम्,
४ **अपुच्छ**-यत, येताम्, यन्त, यथाः, येषाम्, यध्वम्, ये, यावहि, यामहि ॥
५ **अपुपुच्छ्**-अत, एताम्, अन्त, अथाः, एथाम्, अध्वम्, ए, आवहि, आमहि ॥
६ **पुच्छया**-ञ्चक्रे, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **पुच्छयिषी**-ष्ट, यास्ताम्, रन्, ष्ठाः, यास्थाम्, ढ्वम्, ध्वम्, य, वहि, महि ॥
८ **पुच्छयिता**-", रौ, रः, से, साथे, ध्वे, हे, स्वहे, स्महे ॥
९ **पुच्छयि**-ष्यते, ष्येते, ष्यन्ते, ष्यसे, ष्येथे, ष्यध्वे, ष्ये, ष्यावहे, ष्यामहे ॥
१० **अपुच्छयि**-ष्यत, ष्येताम्, ष्यन्त, ष्यथाः, ष्येथाम्, ष्यध्वम्, ष्ये, ष्यावहि, ष्यामहि ॥

भाण्डानि समाचिनोतीति संभाडयते राशीकरोतीत्यर्थः ।

## ७ सम्-भाण्डि-धातोरूपाणि ॥

१ **संभाण्ड**-यते, येते, यन्ते, यसे, येथे, यध्वे, ये, यावहे, यामहे॥

२ **संभाण्डये**-त, याताम्, रन्, थाः, याथाम्, ध्वम्, य, वहि, महि ॥ [ यध्वम्, यै, यावहै, यामहै ॥

३ **संभाण्ड**-यताम्, येताम्, यन्ताम्, यस्व, येथाम्,

४ **समभाण्ड**-यत, येताम्, यन्त, यथाः, येथाम्, यध्वम्, ये, यावहि, यामहि ॥

५ **समबभाण्ड्**-अत, एताम्, अन्त, अथाः, एथाम्, अध्वम्, ए, आवहि, आमहि ॥

६ **संभाण्डया**-ञ्चक्रे, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥

७ **संभाण्डयिषी**-ष्ट, यास्ताम्, रन्, ष्ठाः, यास्थाम्, ढ्वम्, ध्वम्, य, वहि, महि ॥

८ **संभाण्डयिता**-", रौ, रः, से, साथे, ध्वे, हे, स्वहे, स्महे॥

९ **संभाण्डयि**-ष्यते, ष्येते, ष्यन्ते, ष्यसे, ष्येथे, ष्यध्वे, ष्ये, ष्यावहे, ष्यामहे ॥ [ ष्यध्वम्, ष्ये, ष्यावहि, ष्यामहि ॥

१० **समभाण्डयि**-ष्यत, ष्येताम्, ष्यन्त, ष्यथाः, ष्येथाम्,

भाण्डानि समाचिनोतीति परिभाण्डयते राशीकरोतीत्यर्थः ।

## ८ परि-भाण्डि-धातोरूपाणि ॥

१ **परिभाण्ड**-यते, येते, यन्ते, यसे, येथे, यध्वे, ये, यावहे, यामहे ॥ [ य, वहि, महि ॥

२ **परिभाण्डये**-त, याताम्, रन्, थाः, याथाम्, ध्वम्,

३ **परिभाण्ड**-यताम्, येताम्, यन्ताम्, यस्व, येथाम्, यध्वम्, यै, यावहै, यामहै॥ [ ये, यावहि, यामहि ॥

४ **पर्यभाण्ड**-यत, येताम्, यन्त, यथाः, येथाम्, यध्वम्,

५ **पर्यबभाण्ड्**-अत, एताम्, अन्त, अथाः, एथाम्, अध्वम्, ए, आवहि, आमहि ॥

६ **परिभाण्डया**-ञ्चक्रे, इ० ॥ म्बभूव, इ०॥ मास, इ०॥

७ **परिभाण्डयिषी**-ष्ट, यास्ताम्, रन्, ष्ठाः, यास्थाम्, ढ्वम्, ध्वम्, य, वहि, महि ॥

८ **परिभाण्डयिता**-", रौ, रः, से, साथे, ध्वे, हे, स्वहे, स्महे॥

९ **परिभाण्डयि**-ष्यते, ष्येते, ष्यन्ते, ष्यसे, ष्येथे, ष्यध्वे, ष्ये, ष्यावहे, ष्यामहे ॥ [ष्यध्वम्, ष्ये, ष्यावहि, ष्यामहि ॥

१० **पर्यभाण्डयि**-ष्यत, ष्येताम्, ष्यन्त, ष्यथाः, ष्येथाम्,

चीवरं परिधत्ते इति परिचीवरयते ।

## ९ परि-चीवरि-धातोरूपाणि ॥

१ **परिचीवर**-यते, येते, यन्ते, यसे, येथे, यध्वे, ये, यावहे, यामहे ॥

२ **परिचीवरये**-त, याताम्, रन्, थाः, याथाम्, ध्वम्, य, वहि, महि ॥ [ यध्वम्, यै, यावहै, यामहै॥

३ **परिचीवर**-यताम्, येताम्, यन्ताम्, यस्व, येथाम्,

४ **पर्यचीवर**-यत, येताम्, यन्त, यथाः, येथाम्, यध्वम्, ये, यावहि, यामहि ॥

५ **पर्यचिचीवर्**-अत, एताम्, अन्त, अथाः, एथाम्, अध्वम्, ए, आवहि, आमहि ॥

६ **परिचीवरया**-ञ्चक्रे, इ०॥ म्बभूव, इ०॥ मास, इ०॥

७ **परिचीवरयिषी**-ष्ट, यास्ताम्, रन्, ष्ठाः, यास्थाम्, ढ्वम्, ध्वम्, य, वहि, महि ॥

८ **परिचीवरयिता**-", रौ, रः, से, साथे, ध्वे, हे, स्वहे, स्महे॥

९ **परिचीवरयि**-ष्यते, ष्येते, ष्यन्ते, ष्यसे, ष्येथे, ष्यध्वे, ष्ये, ष्यावहे, ष्यामहे॥ [ष्यध्वम्, ष्ये, ष्यावहि, ष्यामहि॥

१० **पर्यचीवरयि**-ष्यत, ष्येताम्, ष्यन्त, ष्यथाः, ष्येथाम्,

चीवरं समाच्छादयतीति संचीवरयते ।

## १० सम्-चीवरि-धातोरूपाणि ॥

१ **संचीवर**-यते, येते, यन्ते, यसे, येथे, यध्वे, ये, यावहे, यामहे॥

२ **संचीवरये**-त, याताम्, रन्, थाः, याथाम्, ध्वम्, य, वहि, महि ॥ [ यै, यावहै, यामहै ॥

३ **संचीवर**-यताम्, येताम्, यन्ताम्, यस्व, येथाम्, यध्वम्,

४ **समचीवर**-यत, येताम्, यन्त, यथाः, येथाम्, यध्वम्, ये, यावहि, यामहि ॥

५ **समचिचीवर्**-अत, एताम्, अन्त, अथाः, एथाम्, अध्वम्, ए, आवहि, आमहि ॥

६ **संचीवरया**-ञ्चक्रे, इ०॥ म्बभूव, इ०॥ मास, इ० ॥

७ **संचीवरयिषी**-ष्ट, यास्ताम्, रन्, ष्ठाः, यास्थाम्, ढ्वम्, ध्वम्, य, वहि, महि ॥

८ **संचीवरयिता**-", रौ, रः, से, साथे, ध्वे, हे, स्वहे, स्महे॥

९ **संचीवरयि**-ष्यते, ष्येते, ष्यन्ते, ष्यसे, ष्येथे, ष्यध्वे, ष्ये, ष्यावहे, ष्यामहे ॥

१० **समचीवरयि**-ष्यत, ष्येताम्, ष्यन्त, ष्यथाः, ष्येथाम्, ष्यध्वम्, ष्ये, ष्यावहि, ष्यामहि ॥

चीवरमर्जयतीति चीवरयते ।

११ चीवरि–धातोरूपाणि ॥

१ चीवर–यते, येते, यन्ते, यसे, येथे, यध्वे, ये, यावहे, यामहे॥
२ चीवरये–त, याताम्, रन्, थाः, याथाम्, ध्वम्, य, वहि, महि ॥ [ यै, यावहै, यामहै ॥
३ चीवर–यताम्, येताम्, यन्ताम्, यस्व, येथाम्, यध्वम्,
४ अचीवर–यत, येताम्, यन्त, यथाः, येथाम्, यध्वम्, ये, यावहि, यामहि ॥ [अध्वम्, ए, आवहि, आमहि॥
५ अचिचीवर्–अत, एताम्, अन्त, अथाः, एथाम्,
६ चीवरया–ञ्चक्रे, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ चीवरयिषी–ष्ट, यास्ताम्, रन्, ष्ठाः, यास्थाम्, ढ्वम्, ध्वम्, य, वहि, महि ॥
८ चीवरयिता–'', रौ, रः, से, साथे, ध्वे, हे, स्वहे, स्महे॥
९ चीवरयि–ष्यते, ष्येते, ष्यन्ते, ष्यसे, ष्येथे, ष्यध्वे, ष्ये, ष्यावहे, ष्यामहे ॥
१० अचीवरयि–ष्यत, ष्येताम्, ष्यन्त, ष्यथाः, ष्येथाम्, ष्यध्वम्, ष्ये, ष्यावहि, ष्यामहि ॥

इति णिङ्प्रत्ययान्ता नामधातवः ॥

इति श्रीमत्तपोगणगगनाङ्गणगगनमणि–सार्वसार्वज्ञशासनसार्वभौम–विद्यापीठादि-प्रस्थानपञ्चकसमाराधक–संविग्नशाखीय–आचार्यचूडामणि–अखण्डविजय-श्रीमद्गुरुराजविजयनेमिसूरीश्वरचरणेन्दिरामन्दिरेन्दिन्दिरायमाणेनान्ते-वासिना शास्त्रविशारदेन कविरत्नेन व्याकरणवाचस्पतिना महोपाध्याय-लावण्यविजयगणिना विरचितस्य धातुरत्नाकरस्य नामधातु-प्रक्रियानिरूपणे षष्ठभागे णिङ्प्रत्ययान्तप्रकरणं सम्पूर्णम् ॥

## अथ णिच्प्रत्ययान्तप्रकरणम् ॥

निरूपिता णिङ्प्रत्ययान्ता नामधातवः। अथ णिच्प्रत्ययान्ता नामधातवो निरूपणीयाः। ननु कीदृशान्नाम्नः कस्मिन्नर्थे णिच् प्रत्ययो भवतीति चेद् गृहाणेमानि सूत्राणि–

### णिज् बहुलं नाम्नः कृगादिषु ॥ ३ । ४ । ४२ ॥

कृगादीनां धातूनामर्थे नाम्नो णिच् प्रत्ययो भवति बहुलम् । बहुलग्रहणं प्रयोगानुसरणार्थम्, तेन यस्मान्नाम्नो यद्विभक्त्यन्ताद् यस्मिन् धात्वर्थे दृश्यते तस्मात्तद्विभक्त्यन्तात्तद्धात्वर्थे एव भवतीति नियमो लभ्यते । मुण्डं करोति मुण्डयति छात्रम् । एवं मिश्रयत्योदनम् । श्लक्ष्णयति वस्त्रम् । लवणयति सूपम् । एभ्यश्च्व्यर्थे एवेति कश्चित् । अमुण्डं मुण्डं करोति मुण्डयतीत्यादि । लघुं करोति लघयति । एवं छिद्रयति । कर्णयति । दण्डयति । अन्धयति । अङ्कयति । व्याकरणस्य सूत्रं करोति व्याकरणं सूत्रयति । द्वारस्योद्घाटनं करोति द्वारमुद्घाटयति । ननु व्याकरणशब्दाद् वाक्ये षष्ठी दृश्यते, उत्पन्ने च प्रत्यये कथं द्वितीया । उच्यते । योऽसौ सूत्रव्याकरणयोः सम्बन्धः स उत्पन्ने प्रत्यये निवर्तते, सूत्रयतिक्रियासम्बन्धाच्च द्वितीयैव । एवद्वारमुद्घाटयति । पाप्मिन उल्लाघयति । त्रिलोकीं तिलकयतीत्याद्यपि द्रष्टव्यम् । अथ तपः करोति तपस्यतीत्यादिवत् कर्मणो वृत्तावन्तर्भूतत्वान्मुण्डिरकर्मकः प्राप्नोति । नैवम् । सामान्यकर्मान्तर्भूतं विशेषकर्मणा तु सकर्मक एव, मुण्डयति कं छात्रमिति । यद्येवं

पुत्रीयतिरपि विशेषकर्मणा सकर्मकः प्राप्नोति, पुत्रीयति कं छात्रमिति । सत्यम् । आचारक्यना तु बुद्धेरपहृतत्वात् इच्छाक्यजन्तस्य विद्यमानमपि विशेषकर्म न प्रयुज्यते । तथाहि । पुत्रीयति छात्रमित्युक्ते पुत्रमिवाचरति छात्रमिति प्रतीतिर्भवति न तु पुत्रमिच्छतीति । तदुक्तम्— सदपीच्छाक्यनः कर्म तदाचारक्यना हृतम् । कौटिल्येनैव गत्यर्थाभ्यासो वृत्तौ न गम्यते ॥ १ ॥ मुण्डं बलीवर्दं करोतीत्युभयधर्मविधाने मुण्डं शुक्लं करोतीत्यनुवादे वाऽनभिधानान्न भवति । पटुमाचष्टे करोति वा पटयति । एवं स्थूलं स्थवयति । दवयति । युवानं यवयति । क्षिप्रं क्षेपयति । क्षुद्रं क्षोदयति । प्रियं दूरं प्रापयति । स्थिरं स्थापयति । स्फिरं स्फापयति । पुच्छं पुच्छयति । वृक्षमाचष्टे रोपयति वा वृक्षयति । कृतं गृह्णाति कृतयति । एवं वर्णयति । त्वचयति । त्वचशब्दोऽकारान्तस्त्वक्पर्यायः । रूपं दर्शयति रूपयति । रूपं निध्यायति निरूपयति । लोमान्यनुमार्ष्टि अनुलोमयति । तूस्तानि विहन्ति उद्धहति वा वितूस्तयति उत्तूस्तयति, केशान् विजटीकरोतीत्यर्थः । वस्त्रं वस्त्रेण वा समाच्छादयति संवस्त्रयति । वस्त्रं परिदधाति परिवस्त्रयति । तृणान्युत्प्लुत्य शातयति उत्तृणयति । हस्तिनातिक्रामति अतिहस्तयति । एवमत्यश्वयति । वर्मणा संनह्यति संवर्मयति । वीणया उपगायति उपवीणयति । सेनया अभियाति अभिषेणयति । चूर्णैरवध्वंसयति अवकिरति वा अवचूर्णयति । तूलैरनुकुष्णाति अवकुष्णाति अनुगृह्णाति वा अनुतूलयति । वास्या छिनत्ति वासयति । एवं परशुना परशयति । असिना असयति । वास्या परिछिनत्ति परिवासयति । वाससा उन्मोचयति उद्वासयति । श्लोकैरुपस्तौति उपश्लोकयति । हस्तेनातिक्षिपति अपहस्तयति । अश्वेन संयुनक्ति समश्वयति । गन्धेनार्चयति गन्धयति । एवं पुष्पयति । बलेन सहते बलयति । शीलेनाचरति शीलयति । एवं सामयति । सान्त्वयति । छन्दसोपचरति उपमन्त्रयते वा उपच्छन्दयति । पाशेन संयच्छति संपाशयति । पाशं पाशाद्वा विमोचयति विपाशयति । शूरो भवति शूरयति । वीर उत्सहते वीरयति । कूलमुल्लङ्घयति उत्कूलयति । कूलं प्रतीपं गच्छति प्रतिकूलयति । कूलमनुगच्छति अनुकूलयति । लोष्टान् अवमर्दयति अवलोष्टयति । पुत्रं सूते पुत्रयति, इत्यादि । आख्यानं नलोपाख्यानं कंसवधं सीताहरणं रामप्रव्रजनं राजागमनं मृगरमणमारात्रिविवासमाचष्टे इत्यादिषु. इन्द्रियाणां जयं क्षीरस्य पानं देवानां यागं धान्यस्य क्रयं धनस्य त्यागमोदनस्य पाकं करोतीत्यादिषु च बहुलवचनान्न भवति । अथ हस्तौ निरस्यति हस्तयते पादयते इत्यादिवद् उत्पुच्छयते इत्यादावप्युपसर्गस्याप्रयोगः प्राप्नोति । नैवम् । यत्रानेकविशेषणविशिष्टा क्रिया प्रत्यायार्थस्तत्र क्रियाविशेषाभिव्यक्तये युक्त उपसर्गप्रयोगः, यथा विपाशयति संपाशयतीति, यत्र त्वेकविशेषणविशिष्टा क्रिया प्रत्ययार्थस्तत्र संदेहाभावादुपसर्गो न युज्यते, यथा श्येन इवाचरति श्येनायते । बाष्पमुद्वमति बाष्पायते । हस्तौ निरस्यति हस्तयते । पुत्रमिवाचरति पुत्रीयति । यद्येवमतिहस्तयति उपवीणयतीत्यादावेकैकविशेषणविशिष्टत्वादुपसर्गो न प्राप्नोति । नैवम् । अत्र णिच्प्रत्ययस्य करोत्याचष्टेऽतिक्रामतीत्याद्यनेकार्थत्वात् संदेहे तदभिव्यक्त्यर्थमुपसर्गप्रयोगः । यत्र पुनरनेकोपसर्गविशिष्टा क्रिया प्रत्ययार्थस्तत्र शब्दशक्तिस्वाभाव्यादेक

एवोपसर्गार्थः प्रत्ययार्थेऽन्तर्भवति द्वितीयस्तूपसर्गेणैव प्रत्याय्यते। यथा भाण्डं समाचिनोति संभाण्डयते। वस्त्रं वस्त्रेण वा समाच्छादयति संवस्त्रयति ॥ ४२ ॥

## व्रताद्भुजितन्निवृत्त्योः ॥ ३ । ४ । ४३ ॥

व्रतं शास्त्रविहितो नियमः। व्रतशब्दाद् भोजने तन्निवृत्तौ च वर्तमानात् कृगादिष्वर्थेषु णिच् प्रत्ययो भवति बहुलम्। पय एव मया भोक्तव्यमिति व्रतं करोति गृह्णाति वा पयो व्रतयति। सावद्यान्नं व्रतयति। सावद्यान्नं मया न भोक्तव्यमिति व्रतं करोति गृह्णाति वा सावद्यान्नं व्रतयति। अथनियमार्थ आरम्भः ॥ ४३ ॥

## सत्यार्थवेदस्याः ॥ ३ । ४ । ४४ ॥

सत्य अर्थ वेद इत्येषां णिच्सन्नियोगे आकारोऽन्तादशो भवति। सत्यमाचष्टे करोति वा सत्यापयति। एवमर्थापयति। वेदापयति। त्र्यन्त्यस्वरादेः [ ७-४-४३ ] इत्याकारस्य लुग् न भवति विधानसामर्थ्यात् ॥ ४४ ॥

## श्वेताश्वाश्वतरगालोडिताह्वरकस्याश्वतरेतकलुक् ॥ ३ । ४ । ४५ ॥

श्वेताश्व अश्वतर गालोडित आह्वरक इत्येषां णिच्संनियोगे यथासंख्यमश्व तर इत क इत्येषां लुग्भवति। श्वेताश्वमाचष्टे करोति वा श्वेताश्वेनातिक्रामतीति वा श्वेतयति। एवमश्वयति। गालोडितमाचष्टे करोति वा गालोडयति। एवमाह्वरयति। लुगर्थं वचनं णिच् तु सर्वत्र पूर्वेण सिद्ध एव ॥ ४५ ॥

अङ्कं करोतीति अङ्कयति।

### १ अङ्कि–धातोरूपाणि ॥

१ अङ्कय–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ अङ्कये–त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ अङ्कय–तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ आङ्कय–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ आञ्चक–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ अङ्कया–ञ्चकार इ० ॥ म्बभूव इ० ॥ मास इ० ॥
७ अङ्क्या–त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ अङ्कयिता–", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ अङ्कयिष्य–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० आङ्कयिष्य–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

" त्र्यन्त्यस्वरादेः " [ ७, ४, ४३ ] इत्यन्त्यस्वरस्य लुग्भवति। अङ्कशब्दो दृश्यकाव्यविशेषे, अङ्क इति प्रसिद्धे नाटकपरिच्छेदे, पर्वते, चिह्ने, रेखायां, युद्धभूषणे, समीपे च वर्तते। क्रोडे तु अस्त्री ॥ अद्यतन्याम् अलोपस्य स्थानिवद्भावे कशब्दस्य द्वित्वे आञ्चकत्–स्थानिवद्भावाभावे तु किशब्दस्य द्वित्वे आञ्चिकत् ॥

अन्तिकमाचष्टे नेदयति।

### २ नेदि–धातोरूपाणि ॥

१ नेदय–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ नेदये–त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ नेदय–तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ अनेदय–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ अनिनेद–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ नेदया–ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ नेद्या–त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ नेदयिता–", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ नेदयिष्य–ति, तः, न्ति, सि, थः, थ, ामि ावः, ामः ॥
१० अनेदयिष्य–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

" बाढान्तिकयोः साधनेदौ " [ ७, ४, ३७ ] इत्यन्तिकशब्दस्य नेद इत्यदन्तादेशः, समानलोपित्वाच्च अनिनेदत् इत्यत्र सन्वदादिकार्याभावः। अन्तिकशब्दः सामीप्ये सामिप्यवति च वर्तते ॥

आह्वरकं कुटिलवाक्यमाचष्टे करोति वा इति आह्वरयति ।

### ३ आह्वरि–धातोरूपाणि ॥

१ आह्वरय–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ आह्वरये–त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ आह्वरय–तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ाणि, ाव, ाम ॥
४ आह्वरय–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ आजह्वर–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ आह्वरया–ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ आह्वराया–त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ आह्वरयिता–", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ आह्वरयिष्य–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० आह्वरयिष्य–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

" श्वेताश्व० " [ ३, ४, ४५ ] इत्याह्वरकशब्दस्य कस्य लुम्भवति । आशिषि–णिरूपनिमित्तापायेनिमित्तापाय इतिन्यायेन पुनरागतस्याकारस्य दीर्घे आह्वरायात्–न च अङ्क्यादिस्यादावपि उक्तापत्तिरितिवाच्यम्, वैषम्यात्, तथाहि –अकलोपमकृत्वा कमात्रस्य लोपविधानेन पृथगकारलोपकरणरूपप्रक्रियागौरवेणात्रैवेदम्, एतदनादरपक्षे आह्वर्यात् ॥

श्लोकैरुपस्तौतीति उपश्लोकयति ।

### ४ उप-श्लोकि–धातोरूपाणि ॥

१ उपश्लोकय–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ उपश्लोकये–त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ उपश्लोकय–तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ उपाश्लोकय–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ उपाशुश्लोक–त्, ताम्, न्, :, तम्, म्, ाव, ाम ॥
६ उपश्लोकया–ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ उपश्लोक्या–त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ उपश्लोकयिता–", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ उपश्लोकयिष्य–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० उपाश्लोकयिष्य–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

" न प्रादिरप्रत्ययः "३–३–४ इति उपस्य धात्ववयत्वाभात् श्लोकि इत्यस्यादावड्विधिः ॥

त्रिलोक्यास्तिलकं करोतीति त्रिलोकीं तिलकयति ।

### ५ तिलकि–धातोरूपाणि ॥

१ तिलकय–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ तिलकये–त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ तिलकय–तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ अतिलकय–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ अतितिलक–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ तिलकया–ञ्चकार इ० ॥ म्बभूव इ० ॥ मास इ० ॥
७ तिलक्या–त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ तिलकयिता–", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ तिलकयिष्य–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० अतिलकयिष्य–त्, ताम्, न्, :, तम्, त, म, ाव, ाम ॥

समानलोपित्वात् सन्वत्कार्य्याभावः ॥

वृन्दारकमाचष्टे करोति वा इति वृन्दयति ।

### ६ वृन्दि–धातोरूपाणि ॥

१ वृन्दय–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ वृन्दये–त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ वृन्दय–तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ अवृन्दय–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ अववृन्द–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ वृन्दया–ञ्चकार इ० ॥ म्बभूव इ० ॥ मास इ० ॥
७ वृन्द्या–त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ वृन्दयिता–", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ वृन्दयिष्य–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० अवृन्दयिष्य–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

" प्रियस्थिर० " [ ७, ४, ३८ ] इति वृन्दारकस्य वृन्दादशः । कश्चित्तु करोत्यर्थे णौ वृन्दादेशे नेच्छति तन्मते, वृन्दारकयतीत्यादि । वृन्दारकशब्दो देवे, मुख्ये, मनोहरे, यूथपतौ च वर्तते ॥

बन्धूनां संवर्गं करोतीति संवर्गयति बन्धून्।

## ७ सम्-वर्गि-धातोरूपाणि ॥

१ **संवर्गय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **संवर्गये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **संवर्गय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ाणि, ाव, ाम ॥
४ **समवर्गय**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **समववर्ग**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **संवर्गया**-ञ्चकार, इ०॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **संवर्ग्या**-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **संवर्गयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः॥
९ **संवर्गयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः॥
१० **समवर्गयिष्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

" न प्रादिरप्रत्ययः " ३-३-४ इति समो धात्ववयवत्वाभावात् वर्गि इत्यस्यादौ अड्विधिः ॥

दीर्घमाचष्टे करोति वा इति द्राघयति।

## ९ द्राघि-धातोरूपाणि ॥

१ **द्राघय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **द्राघये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **द्राघय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ाणि, ाव, ाम ॥
४ **अद्राघय**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **अदिद्रघ**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **द्राघया**-ञ्चकार इ० ॥ म्बभूव इ० ॥ मास इ० ॥
७ **द्राघ्या**-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **द्राघयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **द्राघयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अद्राघयिष्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

मतान्तरे ५ अदद्राघत्। " प्रियस्थिर०" [७, ४, ३८] इति दीर्घशब्दस्य द्राघ् आदेशः। अदिद्रघदित्यत्र संयोगपरत्वात् लघुत्वाभावात् दीर्घाभावः ॥

त्वं कुरुष्वेति प्रेरयतीत्यर्थः। उत्पलमतेन अतो " ञ्णिति ॥४।३।५०॥ इति वृद्धौ प्वागमे, भृत्येन कारापयति। एवं वन्दापयतीत्यादिष्वपि ॥

पाप्मिनामुल्लाघं करोतीति पाप्मिन उल्लाघयति।

## ८ उद्-लाघि-धातोरूपाणि ॥

१ **उल्लाघय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः॥
२ **उल्लाघये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **उल्लाघय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **उदलाघय**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **उदललाघ**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **उल्लाघया**-ञ्चकार, इ० ॥ म्बभूव इ० ॥ मास, इ०॥
७ **उल्लाघ्या**-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **उल्लाघयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः॥
९ **उल्लाघयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः॥
१० **उदलाघयिष्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम॥

उल्लाघशब्दो रोगनिर्मुक्ते, दक्षे शुचौ, मरिचे च वर्तते। "न प्रादिरप्रत्ययः" ३-३-४ इति उदो धात्ववयवत्वाभावात् लाघि-इत्यस्यादौ अड्विधिः. अद्यतन्यां समानलोपित्वात् उपान्त्यह्रस्वसन्वत्कार्य्याभावः ॥

त्वचं गृह्णातीति त्वचयति।

## १० त्वचि-धातोरूपाणि ॥

१ **त्वचय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **त्वचये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **त्वचय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम॥
४ **अत्वचय**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **अतत्वच**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **त्वचया**-ञ्चकार, इ०॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **त्वच्या**-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **त्वचयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **त्वचयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः॥
१० **अत्वचयिष्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

**अत्र त्वचशब्दोऽदन्तस्त्वक्पर्यायः।**

व्यञ्जनान्तस्य तु "ञ्णिति ॥ ४ । ३ ।५० ॥ इति वृद्धौ त्वाचयतीति रूपं स्यात्, तच्चानिष्टमिति न कृतम्। अत्र व्यञ्जनान्तं त्वक्शब्दं परित्यज्य स्वरान्तपाठेन ज्ञाप्यते-नाम्नोऽप्यतोऽन्त्यस्योपान्त्यस्य च अतः " ञ्णिति ॥ ४। ३। ५० ॥ इति सूत्रेण वृद्धिर्भवतीत्युत्पलमतं स्वस्यापि क्वचित् सम्मतमस्तीति। यथा त्वां मां वाचष्टे, अत्र परत्वात् पूर्वमन्त्यस्वरादिलोपे त्वमादेशेऽन्त्यस्वराकारस्य वृद्धौ प्वागमे, त्वापयति, मापयति। ननु कथं कारापयति वन्दापयति, कथापयति, लेखापयतीत्यादि। उच्यते। महाकविप्रयुक्ता एते प्रयोगाः क्वापि न दृश्यन्ते, यदि च क्वचन सन्ति तदैवं समर्थनीयाः। करणं कारस्तमनुयुङ्क्ते

लोष्टानवमर्दयतीति अवलोष्टयति ।

## ११ अव-लोष्टि-धातोरूपाणि ॥

१ **अवलोष्टय**–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **अवलोष्टये**–त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **अवलोष्टय**–तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **अवालोष्टय**–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **अवालुलोष्ट**–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **अवलोष्टया**–ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **अवलोष्ट्या**–त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **अवलोष्टयिता**–", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **अवलोष्टयिष्य**–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अवालोष्टयिष्य**–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

लोष्टशब्दो मृत्पिण्डे वर्तते । न प्रादिरप्रत्यय' ३-३-४ इति अवस्य धात्ववयवत्वाभावात् लोष्टि इत्यस्यादौ अड्विधिः ।

द्वारस्योद्घाटं करोतीति द्वारमुद्घाटयति ।

## १२ उद्-घाटि-धातोरूपाणि ॥

१ **उद्घाटय**–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **उद्घाटये**–त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **उद्घाटय**–तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **उदघाटय**–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **उदजघाट**–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **उद्घाटया**–ञ्चकार इ० ॥ म्बभूव इ० ॥ मास इ० ॥
७ **उद्घाट्या**–त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **उद्घाटयिता**–", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **उद्घाटयिष्य**–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **उदघाटयिष्य**–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

न प्रादिरप्रत्ययः" ३–३–४ इति उदो धात्ववयवत्वाभावात् घाटि–इत्यस्यादौ अड्विधिः । अद्यतन्यां समानलोपित्वात् उपाऽन्त्यह्रस्वसन्वत्कार्य्याभावः ॥

सम्प्रोदश्च कटच् ॥ इति प्रात् प्रकाशेऽर्थे कटप्रत्यये प्रकटः । तं करोतीति प्रकटयति स्वाभिप्रायम् ॥

सम्प्रोन्नेः संकीर्णप्रकाशाधिकसमीपे ॥७।२।१२५॥ इति प्रात् प्रकाशेऽर्थे कटप्रत्यये प्रकटः । तं करोतीति प्रकटयति स्वाभिप्रायम् ॥

## १३ प्रकटि–धातोरूपाणि ॥

१ **प्रकटय**–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **प्रकटये**–त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **प्रकटय**–तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **अप्रकटय**–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **अपप्रकट**–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **प्रकटया**–ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास इ० ॥
७ **प्रकट्या**–त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **प्रकटयिता**–", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **प्रकटयिष्य**–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अप्रकटयिष्य**–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

" न प्रादिरप्रत्ययः " ३–३–४ इत्यत्राप्रत्ययनिषेधे–न धात्ववयवत्वात् प्रसहितस्य कटस्यादावेवाड् भवति ॥ "अनेकस्वरस्य" [ ४, १, ८ ] इति यथेच्छं द्वित्वे–५–अपप्रकटत्, अप्रचकत्, अप्रकटिटत् इति क्रियारत्नसमुच्चयः ॥

दण्डं करोतीति दण्डयति ।

## १४ दण्डि–धातोरूपाणि ॥

१ **दण्डय**–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **दण्डये**–त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **दण्डय**–तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **अदण्डय**–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **अददण्ड**–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **दण्डया**–ञ्चकार इ० ॥ म्बभूव इ० ॥ मास इ० ॥
७ **दण्ड्या**–त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **दण्डयिता**–", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **दण्डयिष्य**–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अदण्डयिष्य**–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

मुण्डं करोतीति मुण्डयति छात्रम् ।

## १५ मुण्डि-धातोरूपाणि ॥

१ **मुण्डय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **मुण्डये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **मुण्डय**-तु,तात्,ताम्,न्तु,",तात्,तम्,त,ानि,ाव,ाम॥
४ **अमुण्डय**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **अमुमुण्ड**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **मुण्डया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **मुण्ड्या**-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **मुण्डयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः॥
९ **मुण्डयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अमुण्डयिष्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

अमुण्डं मुण्डं करोतीति मुण्डयतीत्यादि च्व्यर्थ एवेति कश्चित् । ननु तपस्यतीत्यादिवत् कर्मणो वृत्तावन्तर्भावान्मुण्डिनाऽकर्मकेण भाव्यमिति चेन्न सामान्यकर्मणोऽन्तर्भावेऽपि विशेषकर्मणा सकर्मकत्वात्, मुण्डयति, कम् ? छात्रमिति । यद्येवं पुत्रीयतिरपि विशेषकर्मणा सकर्मकः प्राप्नोति 'पुत्रीयति कम् ? छात्रमिति, सत्यम्, आचारक्यना तु बुद्धेरपहृतत्वादिच्छाक्यन्नन्तस्य विद्यमानमपि कर्म न प्रयुज्यते । तथाहि पुत्रीयति छात्रमित्युक्ते पुत्रमिवाचरति छात्रमिति प्रतीतिर्भवति न तु पुत्रमिच्छतीति । मुण्डं बलिवर्दं करोतीति उभयधर्मविधाने मुण्डं शुक्लं करोतीत्यनुवादे वाऽनभिधानान्न भवति ॥

द्रढमाचष्टे करोति वा इति द्रढयति ।

## १७ द्रढि-धातोरूपाणि ॥

१ **द्रढय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **द्रढये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **द्रढय**-तु,तात्,ताम्,न्तु,",तात्,तम्,त,ानि,ाव,ाम॥
४ **अद्रढय**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **अदद्रढ**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **द्रढया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **द्रढ्या**-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **द्रढयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **द्रढयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अद्रढयिष्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

"पृथुमृदुभृश०" [७, ४, ३९] इति ऋकारस्य रः । समानलोपित्वात् सन्वत्कार्य्याभावः, दृढः स्थूलः बलवान्, कठिनश्च ।

ऊढमाचष्ट इति ऊढयति ।

## १६ ऊढि-धातोरूपाणि ॥

१ **ऊढय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **ऊढये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **ऊढय**-तु,तात्,ताम्,न्तु,",तात्,तम्,त,ानि,ाव,ाम॥
४ **औढय**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **औजढ**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **ऊढया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **ऊढ्या**-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म॥
८ **ऊढयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः॥
९ **ऊढयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **औढयिष्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम॥

औडढत् इत्यपरे । वहेः क्ते ऊढः, तमाख्यदिति **औजढत्**, अत्र परे द्वित्वे "हो धुट्पदान्ते" [२, १, ८२] इत्यस्यासत्त्वे तदाश्रितत्वात् "अधश्चतुर्था०" [२, १, ७९] इत्यस्याप्यसत्त्वे ढत्वधत्वयोरसत्त्वात् अन्त्यस्वरादिलोपस्य च द्वित्वे स्थानित्वादकारेण सह "नाम्नो द्वितीय०" [४-१-७] इत्यनेन हेति द्विर्वचनम् । केचित्तु अन्त्यस्वरादिलोपस्य स्थानित्वमनिच्छन्तो हि इति द्वित्वे-**औजिढत्** ॥

परिवृढं प्रभुमाचष्टे करोति वा इति परिव्रढयति ।

## १८ परि-व्रढि-धातोरूपणि ॥

१ **परिव्रढय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **परिव्रढये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **परिव्रढय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **पर्यव्रढय**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **पर्यवव्रढ**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **परिव्रढया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **परिव्रढ्या** त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **परिव्रढयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **परिव्रढयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **पर्यव्रढयिष्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

पृथुमृदुभृशकृशदृढपरिवृढशब्दानां "पृथुमृदु०" [७, ४, ३९] इति ऋकारस्य रः । समानलोपित्वात् सन्वत्कार्य्याभावः । न प्रादिरिति परेर्न धात्ववयत्वम् । णिचि रेफः । केचित्तु वृढशब्दस्यापीच्छन्ति । वृढमाचष्टे व्रढयति ।

बाढमाचष्टे इति साधयति ।

## १९ साधि–धातोरूपाणि ॥

१ **साधय**–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **साधये–त**, ताम्, युः, ः, तम्, त, यम्, व, म ॥
३ **साधय–तु**, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **असाधय**–त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
५ **अससाध**–त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
६ **साधया–**ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **साध्या**–त्, स्ताम्, सुः, ः, स्तम्, स्त, सम्, स्व, स्म ॥
८ **साधयिता**–", रौ, रः, सि, स्थः, स्थ, स्मि, स्व, स्मः ॥
९ **साधयिष्य**–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **असाधयिष्य**–त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥

अद्यतन्यां समानलोपित्वेन उपान्त्यह्रस्वाभावः सन्वत्कार्य्याभावश्च । "बाढान्तिकयोः साधनेदौ" [ ७, ४, ३७ ] इति बाढशब्दस्य साध इत्यदन्त आदेशः, समानलोपित्वाच्च अससाधत् इत्यत्र सन्वदादिकार्याभावः । बाढशब्दोऽतिशये, अतिशयवति च वर्तते ।

चूर्णैरवध्वंसयति अवकि.रति वा अवचूर्णयति ।

## २० अव–चूर्णि धातोरूपाणि ॥

१ **अवचूर्णय**–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **अवचूर्णये**–त्, ताम्, युः, ः, तम्, त, यम्, व, म ॥
३ **अवचूर्णय**–तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **अवाचूर्णय**–त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
५ **अवाचुचूर्ण**–त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
६ **अवचूर्णया**–ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **अवचूर्ण्या**–त्, स्ताम्, सुः, ः, स्तम्, स्त, सम्, स्व, स्मः ॥
८ **अवचूर्णयिता**–", रौ, रः, सि, स्थः, स्थ, स्मि, स्व, स्म ॥
९ **अवचूर्णयिष्य**–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अवाचूर्णयिष्य**–त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥

न प्रादिरिति तु न धात्ववयवत्वम् अवस्य ।

तृणान्युत्प्लुत्य शातयतीति उत्तृणयति ।

## २१ उद्-तृणि–धातोरूपाणि ॥

१ **उत्तृणय**–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **उत्तृणये**–त्, ताम्, युः, ः, तम्, त, यम्, व, म ॥
३ **उत्तृणय**–तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **उदतृणय**–त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
५ **उदततृण**–त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
६ **उत्तृणया**–ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **उत्तृण्या**–त्, स्ताम्, सुः, ः, स्तम्, स्त, सम्, स्व, स्म ॥
८ **उत्तृणयिता**–", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **उत्तृणयिष्य**–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **उदतृणयिष्य**–त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥

न प्रादिरिति तु उदो न धात्ववयवत्वम् । समानलोपित्वेन सन्वत्कार्य्याभावः ।

कर्णं करोति आचष्टे वा कर्णयति ।

## २२ कर्णि–धातोरूपाणि ॥

१ **कर्णय**–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **कर्णये**–त्, ताम्, युः, ः, तम्, त, यम्, व, म ॥
३ **कर्णय**–तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **अकर्णय**–त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
५ **अचकर्ण**–त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
६ **कर्णया**–ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **कर्ण्या**–त्, स्ताम्, सुः, ः, स्तम्, स्त, सम्, स्व, स्म ॥
८ **कर्णयिता**–", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **कर्णयिष्य**–ति, तः, न्ति, सि, थः, थ, मि, ावः, ामः ॥
१० **अकर्णयिष्य**–त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥

पूर्वस्य लघुपरकत्वाभावेन सन्वत्कार्य्याभावः ।

कृष्णमाचष्टे इति कृष्णयति।

## २३ कृष्णि-धातोरूपाणि ॥

१ कृष्णय-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ कृष्णये-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ कृष्णय-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ अकृष्णय-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ अचकृष्ण-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ कृष्णया-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ कृष्ण्या-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ कृष्णयिता-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ कृष्णयिष्य-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० अकृष्णयिष्य-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

कृष्णशब्दो वासुदेवे, वेदव्यासे अर्जुने, काके, कोकिले, नीले, करमर्दके वृक्षे, नीलवति च वर्तते ॥

प्रमाणं करोतीति प्रमाणयति साक्षिणम्।

## २४ प्र-माणि-धातोरूपाणि ॥

१ प्रमाणय-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ प्रमाणये-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ प्रमाणय-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ प्रामाणय-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ प्राममाण-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ प्रमाणया-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ प्रमाण्या-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ प्रमाणयिता-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ प्रमाणयिष्य-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० प्रामाणयिष्य-त, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

न प्रादिरिति प्रशब्दस्य न धात्ववयत्वम्। समानलोपित्वात् उपाऽन्त्यह्रस्वाभावः सन्वत्कार्याभावश्च ॥

लवणं लवणरसयुक्तं करोतीति लवणयति सूपम्।

## २५ लवणि-धातोरूपाणि ॥

१ लवणय-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ लवणये-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ लवणय-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ अलवणय-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ अललवण-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ लवणया-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ लवण्या-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ लवणयिता-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ लवणयिष्य-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० अलवणयिष्य-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

अलवणं लवणं करोतीति लवणयतीत्यादि च्व्यर्थे एवेति कश्चित्। समानलोपित्वात् उपाऽन्त्यह्रस्वाभावः सन्वत्कार्याभावश्च ॥

श्लक्ष्णं चिक्कणं करोतीति श्लक्ष्णयति वस्त्रम्।

## २६ श्लक्ष्णि-धातोरूपाणि ॥

१ श्लक्ष्णय-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ श्लक्ष्णये-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ श्लक्ष्णय-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव ाम ॥
४ अश्लक्ष्णय-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ अशश्लक्ष्ण-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ श्लक्ष्णया-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ श्लक्ष्ण्या-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ श्लक्ष्णयिता-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ श्लक्ष्णयिष्य-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० अश्लक्ष्णयिष्य-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

अश्लक्ष्णं श्लक्ष्णं करोतीति श्लक्ष्णयतीत्यादि च्व्यर्थे एवेति कश्चित् ॥

वर्णं गृह्णातीति वर्णयति ।

## २७ वर्णि-धातोरूपाणि ॥

१ **वर्णय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **वर्णये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **वर्णय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **अवर्णय**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **अववर्ण**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **वर्णया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **वर्ण्या**-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **वर्णयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **वर्णयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अवर्णयिष्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

वर्णशब्दः कुङ्कुमे, ब्राह्मणादिजातौ, शुक्लादिरूपे वर्णे, अकाराद्यक्षरे, यशसि, अङ्गरागे, गुणे, स्वर्णे, विलेपनद्रव्ये, विलेपने, स्तुतौ, गीतक्रमे, तालभेदे, चित्रे च वर्तते ॥

हस्तेनापक्षिपतीति अपहस्तयति ।

## २८ अप-हस्ति-धातोरूपाणि ॥

१ **अपहस्तय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **अपहस्तये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **अपहस्तय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **अपाहस्तय**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **अपाजहस्त**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **अपहस्तया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **अपहस्त्या**-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **अपहस्तयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **अपहस्तयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अपाहस्तयिष्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

न प्रादिरिति अपस्य न धात्ववयवत्वम् ॥

तूस्तानि उद्धहतीति उत्तूस्तयति केशान्, विजटी करोतीत्यर्थः ।

## २९ उद्-तूस्ति-धातोरूपाणि ॥

१ **उत्तूस्तय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **उत्तूस्तये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **उत्तूस्तय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **उदतूस्तय**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **उदतुतूस्त**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **उत्तूस्तया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **उत्तूस्त्या**-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **उत्तूस्तयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **उत्तूस्तयिष्य**-ति तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **उदतूस्तयिष्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

न प्रादिरिति उदोन धात्ववयवत्वम् ॥

कृतं गृह्णातीति कृतयति, उपकारं स्वीकरोतीत्यर्थः ॥

## ३० कृति-धातोरूपाणि ॥

१ **कृतय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **कृतये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **कृतय**-तु, तात् ताम्, न्तु, ", तात्, तम्, त, ानि ाव, ाम ॥
४ **अकृतय**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **अचकृत**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **कृतया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **कृत्या**-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **कृतयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **कृतयिष्य**-ति, तः, न्तिः, सि, थः, थ, ामि, ावः, ामः ॥
१० **अकृतयिष्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

समानलोपित्वेन सन्वत्कार्याभावः ॥

गालोडितमाचष्टे करोति वा गालोडयति ।

## ३१ गालोडि-धातोरूपाणि ॥

१ **गालोडय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **गालोडये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **गालोडय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **अगालोडय**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **अजगालोड**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **गालोडया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **गालोड्या**-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **गालोडयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **गालोडयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अगालोडयिष्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

गालोडितशब्दो गोदोहने, विलोडने, वाग्विवेचने च वर्तते । श्वेताश्वअश्वतर " ३-४-४५-इत्यादिना इतस्यलुक् । न च पुनरपि कथन्नोन्त्यस्वरलोप इति वाच्यम् येन नाप्राप्ति न्यायेन तस्य पूर्वमेव बाधितत्वात् ॥

तूस्तानि विहन्तीति वितूस्तयति केशान्, विजटीकरोतीत्यर्थः ।

## ३२ वि-तूस्ति-धातोरूपाणि ॥

१ **वितूस्तय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **वितूस्तये**-त्, ताम्, यु, :, तम्, त, यम्, व, म ॥
३ **वितूस्तय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **व्यतूस्तय**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **व्यतुतूस्त**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **वितूस्तया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **वितूस्त्या**-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **वितूस्तयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **वितूस्तयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **व्यतूस्तयिष्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

तूस्तशब्दो जटायां, संहतकेशेषु, धूलौ, सूक्ष्मे च वर्तते ॥

कृत्यस्य पर्यन्तं करोतीति पर्यन्तयति कृत्यम् ।

## ३३ परि-अन्ति-धातोरूपाणि ॥

१ **पर्यन्तय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः ामः ॥
२ **पर्यन्तये**-त्, ताम्, यु, :, तम्, त, यम्, व, म ॥
३ **पर्यन्तय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **पर्यान्तय**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **पर्यान्तत**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **पर्यन्तया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **पर्यन्त्या**-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **पर्यन्तयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **पर्यन्तयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **पर्यान्तयिष्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

न प्रादिरिति परेर्न धात्ववयवत्वम्-अद्यतन्याम् अ-लोपस्य स्थानिवद्भावेन तशब्दस्य द्वित्वे पर्यान्ततत्, स्थानिवद्भावाभावे न्तिशब्दस्य द्वित्वे पर्यान्तितत् ॥

वार्तं नीरोगं करोतीति वार्तयति ।

## ३४ वार्ति-धातोरूपाणि ॥

१ **वार्तय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **वार्तये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **वार्तय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **अवार्तय**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **अववार्त**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **वार्तया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **वार्त्या**-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **वार्तयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **वार्तयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अवार्तयिष्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

पय एव मया भोक्तव्यमिति व्रतं करोति गृह्णाति वा इति पयो व्रतयति ।

### ३५ व्रति-धातोरूपाणि ॥

१ व्रतय-ति, तः, न्ति, सि, थः, थ, मि, ावः, ामः ॥
२ व्रतये-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ व्रतय-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ अव्रतय-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ अवव्रत-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ व्रतया-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ व्रत्या-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म॥
८ व्रतयिता-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः॥
९ व्रतयिष्य-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः॥
१० अव्रतयिष्य-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

समानलोपित्वात् सन्वत्कार्य्याभावः । सावद्यान्नं मया न भोक्तव्यमिति व्रतं करोति गृह्णाति वा सावद्यान्नं व्रतयति ॥

अर्थमाचष्टे करोति वा इति अर्थापयति ।

### ३६ अर्थापि-धातोरूपाणि ॥

१ अर्थापय-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ अर्थापये-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ अर्थापय-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ आर्थापय-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ आर्तिथप-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ अर्थापया-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ अर्थाप्या-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म॥
८ अर्थापयिता-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ अर्थापयिष्य-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः॥
१० आर्थापयिष्य-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

" सत्यार्थवेदस्याः " [ ३, ४, ४४ ] इत्याकारे पुसि च अर्थापयति । मतान्तरे ५-आर्तथप-त् । " अर्त्तिरीव्लीह्रीक्नूयिक्ष्माय्यातां पुः ॥ ४-२-२१-इत्यत्र बहुवचनस्य व्याप्त्यर्थत्वेन नाम्नोऽपि पुर्विधानम् । आर्तीथपदित्येके ॥

कृतार्थं करोतीति कृतार्थयति ।

### ३७ कृतार्थि-धातोरूपाणि ॥

१ कृतार्थय-ति, तः, न्ति, सि, थः, थ, मि, ावः, ामः ॥
२ कृतार्थये-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ कृतार्थय-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ अकृतार्थय-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ अचकृतार्थ-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ कृतार्थया-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ कृतार्थ्या-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ कृतार्थयिता-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः॥
९ कृतार्थयिष्य-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० अकृतार्थयिष्य-त्, ताम्, न्, :, तम्, त म्, ाव, ाम ॥

वेदमाचष्टे इति वेदापयति ।

### ३८ वेदापि-धातोरूपाणि ॥

१ वेदापय-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ वेदापये-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ वेदापय-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ अवेदापय-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ अविवेदप-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ वेदापया-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ वेदाप्या-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ वेदापयिता-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ वेदापयिष्य-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० अवेदापयिष्य-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

" सत्यार्थवेदस्याः " [ ३-४-४४ ] इत्याकारे पुसि च वेदापयति ॥

अन्धं करोतीति अन्धयति ।

## ३९ अन्धि-धातोरूपाणि ॥

१ अन्धय-ति, तः, न्ति, सि, थः, थ, ।मि, ।वः, ।मः ॥
२ अन्धये-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ अन्धय-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ।नि, ।व, ।म ॥
४ आन्धय-त्, ताम्, न्, :, तम्, त, म्, ।व, ।म ॥
५ आन्दध-त्, ताम्, न्:, :, तम्, त, म्, ।व, ।म ॥
६ अन्धया-ञ्चकार इ० ॥ म्बभूव इ० ॥ मास इ० ॥
७ अन्ध्या-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ अन्धयिता-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ अन्धयिष्य-ति, तः, न्ति, सि, थः, थ, ।मि, ।वः, ।मः ॥
१० आन्धयिष्य-त्, ताम्, न्, :, तम्, त, म्, ।व, ।म ॥

मतान्तरे ५-आन्दिध-त् । अलोपस्य स्थानिवद्भावेन धशब्दस्य द्वित्वे आन्दधत्- । स्थानिवद्भावाभावे धिशब्द-स्य द्वित्वे आन्दिधत् ॥

गन्धेनार्चयति गन्धयति ।

## ४० गन्धि-धातोरूपाणि ॥

१ गन्धय-ति, तः, न्ति, सि, थः, थ, ।मि, ।वः, ।मः ॥
२ गन्धये-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ गन्धय-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ।नि, ।व, ।म ॥
४ अगन्धय-त्, ताम्, न्, :, तम्, त, म्, ।व, ।म ॥
५ अजगन्ध-त्, ताम्, न्, :, तम्, त, म्, ।व, ।म ॥
६ गन्धया-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ गन्ध्या-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ गन्धयिता-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ गन्धयिष्य-ति, तः, न्ति, सि, थः, थ, ।मि, ।वः, ।मः ॥
१० अगन्धयिष्य-त्, ताम्, न्, :, तम्, त, म्, ।व, ।म ॥

वृद्धमाचष्टे करोति वा इति वर्षयति, ज्ययति ।

## ४१ वर्षि-धातोरूपाणि ॥

१ वर्षय-ति, तः, न्ति, सि, थः, थ, ।मि, ।वः, ।मः ॥
२ वर्षये-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ वर्षय-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ।णि, ।व, ।म ॥
४ अवर्षय-त्, ताम्, न्, :, तम्, त, म्, ।व, ।म ॥
५ अववर्ष-त्, ताम्, न्, :, तम्, त, म्, ।व, ।म ॥
६ वर्षया-ञ्चकार इ०॥ म्बभूव इ०॥ मास इ० ॥
७ वर्ष्या-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ वर्षयिता-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ वर्षयिष्य-ति, तः, न्ति, सि, थः, थ, ।मि, ।वः, ।मः ॥
१० अवर्षयिष्य-त्, ताम्, न्, :, तम्, त, म्, ।व, ।म ॥

वृद्धशब्दस्य " प्रियस्थिर० " [ ७, ४, ३८ ] इति वर्ष इत्यादेशः । " वृद्धस्य च ज्यः " [ ७, ४, ३५ ] इति ज्य आदेशश्च ॥

## ४१ ज्यि-धातोरूपाणि ॥

१ ज्यय-ति, तः, न्ति, सि, थः, थ, ।मि, ।वः, ।मः ॥
२ ज्यये-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ ज्यय-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ।नि, ।व, ।म ॥
४ अज्यय-त्, ताम्, न्, :, तम्, त, म्, ।व, ।म ॥
५ अजज्य-त्, ताम्, न्, :, तम्, त, म्, ।व, ।म ॥
६ ज्यया-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ ज्याया-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ ज्ययिता-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ ज्ययिष्य-ति, तः, न्ति, सि, थः, थ, ।मि, ।वः, ।मः ॥
१० अज्ययिष्य-त्, ताम्, न्, :, तम्, त, म्, ।व, ।म ॥

मतान्तरे अजिज्यत् । परोक्षायाम्-ज्य णि णव इति स्थिते णेरयादेशे अनेस्वरत्वात् परोक्षाया आम् इत्यादेशे परोक्षान्तः कृभ्वस्त्यनुयोगः । पूर्वम् अकारलोपेऽपि स्थानिवद्भावेन अनेकस्वरत्वमबाधितमेव ॥ आशिषि णि-रूपनिमित्तापाये अकारलोपस्याप्यभावात् अकारसद्भावे दीर्घे ज्यायात्-अलोपानिवृत्तौ तु ज्यात् ॥

**दृष्टचरस्य चिह्नं करोतीति चिह्नयति दृष्टचरम् ।**

## ४२ चिह्न–धातोरूपाणि ॥

१ **चिह्नय**–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **चिह्नये**–त्, ताम्, युः, ः, तम्, त, यम्, व, म ॥
३ **चिह्नय**–तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **अचिह्नय**–त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
५ **अचिचिह्न**–त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
६ **चिह्नया**–ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **चिह्न्या**–त्, स्ताम्, सुः, ः, स्तम्, स्त, सम्, स्व, स्म ॥
८ **चिह्नयिता**–", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **चिह्नयिष्य**–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अचिह्नयिष्य**–त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥

**अल्पमाचष्टे इति अल्पयति, कनयति ।**

## ४३ अल्पि–धातोरूपाणि ॥

१ **अल्पय**–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **अल्पये**–त्, ताम्, युः, ः, तम्, त, यम्, व, म ॥
३ **अल्पय**–तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **आल्पय**–त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
५ **आलल्प**–त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
६ **अल्पया**–ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **अल्प्या**–त्, स्ताम्, सुः, ः, स्तम्, स्त, सम्, स्व, स्म ॥
८ **अल्पयिता**–", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **अल्पयिष्य**–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **आल्पयिष्य**–त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥

अद्यतन्याम् अलोपस्य स्थानिवद्भावेन ल्पशब्दस्य द्वित्वे आलल्पत्, स्थानिवद्भावाभावे तु लिपशब्दस्य द्वित्वे आलिल्पत् ॥

## ४३ कनि–धातोरूपाणि ॥

१ **कनय**–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **कनये**–त्, ताम्, युः, ः, तम्, त, यम्, व, म ॥
३ **कनय**–तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **अकनय**–त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
५ **अचीकन**–त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
६ **कनया**–ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **कन्या**–त्, स्ताम्, सुः, ः, स्तम्, स्त, सम्, स्व, स्म ॥
८ **कनयिता**–", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **कनयिष्य**–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अकनयिष्य**–त्, ताम्, न्, ः, तम्, त, म्, ावं, ाम ॥

" अल्पयूनोः कन्वाः " [ ७, ४, ३३ ] इति अल्पशब्दस्य वा कन् इत्यादेशः ।

**रूपं निध्यायतीति निरूपयति ।**

## ४४ नि–रूपि–धातोरूपाणि ॥

१ **निरूपय**–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **निरूपये**–त्, ताम्, युः, ः, तम्, त, यम्, व, म ॥
३ **निरूपय**–तु, तात्, ताम्, न्तु, ', तात्, तम्, त, ाणि, ाव, ाम ॥
४ **न्यरूपय**–त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
५ **न्यरुरूप**–त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
६ **निरूपया**–ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **निरूप्या**–त्, स्ताम्, सुः, ः, स्तम्, स्त, सम्, स्व, स्म ॥
८ **निरूपयिता**–", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **निरूपयिष्य**–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **न्यरूपयिष्य**–त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥

न प्रादिरिति नेर्धात्वनवयवत्वात् रूपि इत्यस्यादौ अड्विधिः ॥ अद्यतन्याम् समानलोपित्वात् उपाऽन्त्यह्रस्वाभावः सन्वत्कार्य्याभावश्च ॥

पुष्पैरर्चयतीति पुष्पयति ।

## ४५ पुष्पि–धातोरूपाणि ॥

१ **पुष्पय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **पुष्पये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **पुष्पय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ाणि, ाव, ाम ॥
४ **अपुष्पय**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **अपुपुष्प**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **पुष्पया**-ञ्चकार, इ० ॥ **म्बभूव, इ०** ॥ मास, इ० ॥
७ **पुष्प्या**-त्, **स्ताम्, सुः, :, स्तम्**, स्त, **सम्**, स्व, स्म ॥
८ **पुष्पयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **पुष्पयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अपुष्पयिष्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

रूपं दर्शयति, मतान्तरे पश्यतीति रूपयति ।

## ४६ रूपि–धातोरूपाणि ॥

१ **रूपय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **रूपये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **रूपय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ाणि, ाव, ाम ॥
४ **अरूपय**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **अरुरूप**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **रूपया**-ञ्चकार, इ० ॥ **म्बभूव, इ०** ॥ मास, इ० ॥
७ **रूप्या**-त्, **स्ताम्, सुः, :, स्तम्**, स्त, सम्, स्व, स्म ॥
८ **रूपयिता**-**", रौ, रः**, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **रूपयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अरूपयिष्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

रूपशब्दः स्वभावे, सौन्दर्ये, शुक्लादिवर्णे, तद्वति च वर्तते । अद्यतन्याम् समानलोपित्वात् उपाऽन्त्यह्रस्वाभावः सन्वत्कार्य्याभावश्च ॥

अर्यमाचष्टे इति अर्ययति ।

## ४७ अर्यि–धातोरूपाणि ॥

१ **अर्यय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **अर्यये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **अर्यय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ाणि, ाव, ाम ॥
४ **आर्यय**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **आरर्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **अर्यया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **अर्य्या**-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **अर्ययिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **अर्ययिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **आर्ययिष्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

अर्यः स्वामी वैश्यो वा आरर्यत् अत्र " स्वरादेः० " [ ४, १, ४ ] इति र्यद्वित्वे कार्ये स्थानि-निमित्तापक्षयापि प्राग्विधिरिष्यते ॥

प्रियमाचष्टे करोति वा इति प्रापयति ।

## ४८ प्रापि–धातोरूपाणि ॥

१ **प्रापय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **प्रापये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **प्रापय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ाणि, ाव, ाम ॥
४ **अप्रापय**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **अपिप्रप**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **प्रापया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **प्राप्या**-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **प्रापयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **प्रापयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अप्रापयिष्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

" प्रियस्थिर० " [ ७, ४, ३८ ] इति प्रियशब्दस्य प्रा इत्यादेशः ॥

प्रशस्यमाचष्टे करोति वा इति श्रयति, ज्ययति ॥

## ४९ श्रि-धातोरूपाणि ॥

१ **श्रय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **श्रये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **श्रय-तु**, तात्, ताम्, न्तु, ", तात्, तम्, त, ाणि, ाव ाम ॥
४ **अश्रय-त्**, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **अशिश्र** त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **श्रया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **श्राया**-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **श्रयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **श्रयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अश्रयिष्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

५ अशश्रत् इत्यपरे। आशिषि णिरूपनिमित्तापाये अकार लोपस्याप्यपायात् अकारसद्भावे दीर्घे च श्रायात् अकारलोपानिवृत्तौ तु श्र्यात् ॥

## ४९ ज्यि-धातोरूपाणि ॥

१ **ज्यय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **ज्यये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **ज्यय-तु**, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **अज्यय-त्**, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **अजिज्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **ज्यया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **ज्याया**-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **ज्ययिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्म ॥
९ **ज्ययिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अज्ययिष्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

५ अजज्यत् इत्यपरे। "प्रशस्यस्य श्रः" [ ७, ४, ३४ ] इति "वृद्धस्य च ज्य" [ ७, ४, ३५ ] इति च क्रमेण इति ज्य श्र इति चादेशौ भवतः ॥

## ४९ प्र-शस्यि-धातोरूपाणि ॥

१ **प्रशस्यय** ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **प्रशस्यये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **प्रशस्यय-तु**, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **प्राशस्यय**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **प्राशशस्य**-त्, ताम्, न्, :, तम्, त, म्, ाव ाम ॥
६ **प्रशस्यया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **प्रशस्या**-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **प्रशस्ययिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **प्रशस्ययिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **प्राशस्ययिष्य** त, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

मतान्तरे प्रशस्यशब्दस्य णावादेशो न भवतीति प्रशस्ययति ॥

सत्यं करोति आचष्टे वा इति सत्यापयति।

## ५० सत्यापि-धातोरूपाणि ॥

१ **सत्यापय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **सत्यापये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **सत्यापय-तु**, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **असत्यापय**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **अससत्यप**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **सत्यापया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **सत्याप्या**-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्वः, स्मः ॥
८ **सत्यापयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **सत्यापयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **असत्यापयिष्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

"सत्यार्थवेदस्याः" [ ३, ४, ४४ ] इत्याकारे पुसि च सत्यापयति।

५-अससत्यपत्, असतित्यपत्, ओणेर्ऋदित्करणज्ञापकात्, पूर्वमुपान्त्यह्रस्वे पश्चाद्द्वित्वे, असत्यपिपत्।

अश्वतरमाचष्टे तेनातिक्रामति वा इति अश्वयति ।

## ५१ अश्वि-धातोरूपाणि ॥

१ **अश्वय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **अश्वये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **अश्वय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **आश्वय**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **आशश्व**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **अश्वया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **अश्व्या**-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **अश्वयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **अश्वयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **आश्वयिष्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

अद्यतन्याम् अलोपस्य स्थानिवद्भावेन श्वशब्दस्य द्वित्वे आशश्वत्—

स्थानिवद्भावाभावे तु श्विशब्दस्य द्वित्वे-आशिश्वत् ॥

क्षिप्रमाचष्टे करोति वा इति क्षेपयति ।

## ५२ क्षेपि-धातोरूपाणि ॥

१ **क्षेपय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **क्षेपये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **क्षेपय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ाणि, ाव, ाम ॥
४ **अक्षेपय**-त्, ताम्, न्, :, तम्, त म्, ाव, ाम ॥
५ **अचिक्षेप**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **क्षेपया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **क्षेप्या**-त्, स्ताम्, सु, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **क्षेपयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **क्षेपयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अक्षेपयिष्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

समानलोपित्वात् ह्रस्वाभावः सन्वत्कार्याभावश्च "स्थूलदूर०" [७, ४, ४२] इत्यन्तस्थादेरंशस्य रशब्दस्य लुग् नामिनो गुणश्च ॥

क्षुद्रमाचष्टे करोति वा इति क्षोदयति ।

## ५३ क्षोदि-धातोरूपाणि ॥

१ **क्षोदय**-ति, त, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **क्षोदये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **क्षोदय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **अक्षोदय**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **अचुक्षोद**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **क्षोदया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **क्षोद्या**-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **क्षोदयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **क्षोदयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अक्षोदयिष्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

"स्थूलदूर०" [७, ४, ४२] इत्यस्थादेरंशस्य लुग्नामिनो गुणश्च । समानलोपित्वात् उपान्त्यह्रस्वः सन्वत्कार्यं च न भवति ॥

चिरमाचष्टे विलम्बते वा इति चिरयति ।

## ५४ चिरि-धातोरूपाणि ॥

१ **चिरय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **चिरये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **चिरय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ाणि, ाव, ाम ॥
४ **अचिरय**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **अचिचिर**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **चिरया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **चिर्या**-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **चिरयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **चिरयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अचिरयिष्य**-त्, ताम्, न, :, तम्, त, म्, ाव, ाम ॥

समानलोपित्वात् सन्वत्कार्याभावः ॥

छिद्रं करोतीति छिद्रयति ।

## ५५ छिद्रि–धातोरूपाणि ॥

१ **छिद्रय**–ति, त, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **छिद्रये**–त्, ताम्, यु, :, तम्, त, यम्, व, म ॥
३ **छिद्रय**–तु तात्, ताम्, न्तु, ", तात्, तम्, त, ाणि, ाव, ाम ॥
४ **अच्छिद्रय**–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **अचिच्छिद्र**–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **छिद्रया**–ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **छिद्र्या**–त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **छिद्रयिता**–", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **छिद्रयिष्य**–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अछिद्रयिष्य**–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

तृप्रमाचष्टे करोति वा इति त्रपयति ।

## ५६ त्रपि–धातोरूपाणि ॥

१ **त्रपय**–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **त्रपये**–त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **त्रपय**–तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ाणि, ाव, ाम ॥
४ **अत्रपय**–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **अतित्रप**–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **त्रपया**–ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **त्रप्या**–त, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म॥
८ **त्रपयिता**–", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **त्रपयिष्य**–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अत्रपयिष्य**–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

"प्रियस्थिर०" [ ७, ४, ३८ ] इति त्रप् आदेशः। असमानलोपित्वात् सन्वद्भावे अतित्रपत्, लघुत्वाभावाच्च दीर्घत्वम्। मतान्तरे त्रापयतीत्यादि। तृप्रशब्दो मेघान्तधर्मे, आज्ये, काष्ठे, पापे, दुःखे च वर्तते ॥

दूरमाचष्टे करोति वा इति दवयति ।

## ५७ दवि–धातोरूपाणि ॥

१ **दवय**–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **दवये**–त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **दवय**–तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम॥
४ **अदवय**–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **अदुदव**–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **दवया**–ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **दव्या**–त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **दवयिता**–", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **दवयिष्य**–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अदवयिष्य**–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

"स्थूलदूर०" [ ७, ४, ४२ ] इति अन्तस्थादेर्लोकि नामिनो गुणे च दवयति। णौ यत्कृतं कार्यं तत्सर्वं स्थानिवद्भवतीति न्यायेन दूशब्दस्य द्वित्वे अदुदवत्। केचित्तु स्थूलदूरयूनां करोत्यर्थे णावन्तस्थादेर्लुकं नामिनो गुणं च नेच्छन्ति स्थूलं करोति स्थूलयति। दूरयति। यूवयति।

वस्त्रं परिदधातीति परिवस्त्रयति ।

## ५८ परि-वस्त्रि–धातोरूपाणि ॥

१ **परिवस्त्रय**–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **परिवस्त्रये**–त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **परिवस्त्रय**–तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ाणि, ाव, ाम ॥
४ **पर्यवस्त्रय**–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **पर्यववस्त्र**–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **परिवस्त्रया**–ञ्चकार, इ०॥ म्बभूव, इ०॥ मास, इ०॥
७ **परिवस्त्र्या**–त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **परिवस्त्रयिता**–", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **परिवस्त्रयिष्य**–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **पर्यवस्त्रयिष्य**–त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

"न प्रादिः" इति परेर्न धात्ववयवत्वम् ॥

पुत्रं सूते इति पुत्रयति।

## ५९ पुत्रि-धातोरूपाणि ॥

१ पुत्रय-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ पुत्रये-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ पुत्रय-तु, तात्, ताम्, न्तु, '', तात्, तम्, त, ाणि, ाव, ाम ॥
४ अपुत्रय-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ अपुपुत्र-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ पुत्रया-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ पुत्र्या-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्वः, स्मः॥
८ पुत्रयिता-'', रौ, रः, सि, थः, थ, स्मि, स्वः, स्मः ॥
९ पुत्रयिष्य-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० अपुत्रयिष्य-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

मिश्रं करोतीति मिश्रयत्योदनम्।

## ६० मिश्र-धातोरूपाणि ॥

१ मिश्रय-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ मिश्रये-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ मिश्रय-तु, तात्, ताम्, न्तु, '', तात्, तम्, त, ाणि, ाव, ाम ॥
४ अमिश्रय-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ अमिमिश्र-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ मिश्रया-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ मिश्र्या-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म॥
८ मिश्रयिता-'', रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ मिश्रयिष्य-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० अमिश्रयिष्य-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

अमिश्रं मिश्रं करोतीति मिश्रयतीत्यादि च्व्यर्थे एवेति कश्चित्।

वीर उत्सहते वीरयति।

## ६१ वीरि-धातोरूपाणि ॥

१ वीरय-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ वीरये-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ वीरय-तु, तात्, ताम्, न्तु, '', तात्, तम्, त, ाणि, ाव, ाम ॥
४ अवीरय-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ अविवीर-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ वीरया-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ वीर्या-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ वीरयिता-'', रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ वीरयिष्य-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० अवीरयिष्य-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

शूरो भवतीति शूरयति।

## ६२ शूरि-धातोरूपाणि ॥

१ शूरय-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ शूरये-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ शूरय-तु, तात्, ताम्, न्तु, '', तात्, तम्, त, ाणि, ाव, ाम ॥
४ अशूरय-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ अशुशूर-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ शूरया-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ शूर्या-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ शूरयिता-'', रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ शूरयिष्य-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० अशूरयिष्य-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

५ अशुशूरत्-अत्र समानलोपित्वान्न सन्वद्भावः।

**वस्त्रं वस्त्रेण वा समाच्छादयतीति संवस्त्रयति ।**

## ६३ सम्-वस्त्रि-धातोरूपाणि ॥

१ **संवस्त्रय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **संवस्त्रये**-त्, ताम्, युः, ः, तम्, त, यम्, व, म ॥
३ **संवस्त्रय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ाणि, ाव, ाम ॥
४ **समवस्त्रय**-त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
५ **समववस्त्र**-त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
६ **संवस्त्रया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **संवस्त्र्या**-त्, स्ताम्, सुः, ः, स्तम्, स्त, सम्, स्व, स्म ॥
८ **संवस्त्रयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **संवस्त्रयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **समवस्त्रयिष्य**-त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥

"न प्रादिः०" इति समो न धात्ववयवत्वम् ॥

**व्याकणरस्य सूत्रं करोतीति व्याकरणं सूत्रयति ।**

## ६४ सूत्रि-धातोरूपाणि ॥

१ **सूत्रय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **सूत्रये**-त्, ताम्, युः, ः, तम्, त, यम्, व, म ॥
३ **सूत्रय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ाणि, ाव, ाम ॥
४ **असूत्रय**-त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
५ **असुसूत्र**-त्, ताम्, न्, ः, तम्, म्, ाव, ाम ॥
६ **सूत्रया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **सूत्र्या**-त्, स्ताम्, सुः, ः, स्तम्, स्त, सम्, स्व, स्म ॥
८ **सूत्रयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **सूत्रयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **असूत्रयिष्य**-त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥

सूत्रव्याकरणयोः सम्बन्धस्य उत्पन्ने प्रत्यये निवर्तनात् सूत्रयतिक्रियासम्बन्धाच्च व्याकरणशब्दाद् द्वितीयैव, एवमन्यत्रापि ॥

**स्थिरमाचष्टे करोती वा इति स्थापयति ।**

## ६५ स्थापि-धातोरूपाणि ॥

१ **स्थापय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **स्थापये**-त्, ताम्, युः, ः, तम्, त, यम्, व, म ॥
३ **स्थापय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **अस्थापय**-त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
५ **अतिष्ठप**-त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
६ **स्थापया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **स्थाप्या**-त्, स्ताम्, सुः, ः, स्तम्, स्त, सम्, स्व, स्म ॥
८ **स्थापयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **स्थापयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अस्थापयिष्य**-त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥

मतान्तरे अतिस्थप-त्, "प्रियस्थिर०" [७, ४, ३८] इति स्थिरशब्दस्य स्था इत्यादेशः । पुसि सन्वद्भावे च 'अतिष्ठपत्' लघुत्वाभावान्न दीर्घत्वम् ॥

**स्फिरमाचष्टे करोति वा इति स्फापयति ।**

## ६६ स्फापि-धातोरूपाणि ॥

१ **स्फापय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **स्फापये**-त्, ताम्, युः, ः, तम्, त, यम्, व, म ॥
३ **स्फापय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **अस्फापय**-त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
५ **अपिस्फप**-त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
६ **स्फापया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **स्फाप्या**-त्, स्ताम्, सुः, ः, स्तम्, स्त, सम्, स्व, स्म ॥
८ **स्फापयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **स्फापयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अस्फापयिष्य**-त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥

मतान्तरे "प्रियस्थिर०" [७, ४, ३८] इति स्फा आदेशे पुसि च स्फापयति, पुसि सन्वद्भावे च 'अपिस्फपत्' लघुत्वाभावान्न दीर्घत्वम् अपिस्फपत् । स्फिरशब्दः प्रचुरे, वृद्धे, वृद्धौ च वर्तते ॥

## ६७ अनु-तुलि-धातोरूपाणि ॥

१ **अनुतूलय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **अनुतूलये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **अनुतूलय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **अन्वतूलय**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **अन्वतुतूल**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **अनुतूलया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **अनुतूल्या**-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **अनुतूलयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **अनुतूलयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अन्वतूलयिष्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

"न प्रादिः०" इति अनोर्न धात्ववयवत्वम्। समानलोपित्वाद् ह्रस्वाभावः सन्वत्कार्याभावश्च। तूलैरनुकुष्णाति अवकुष्णाति, अनुगृह्णातीत्यनुतूलयति। अवतूलयति। अनुकुष्णात्यवकुष्णात्योः साधारणोऽर्थोऽनुगृह्णातीति अनुतूलयतीत्यस्य तूलैः कृत्वा अनुकूलं यथा भवति एवमन्तरवयवान् बहिर्निःसारयतीत्यर्थः ॥

कूलमुल्लङ्घयतीति उत्कूलयति।

## ६८ उद्-कूलि-धातोरूपाणि ॥

१ **उत्कूलय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **उत्कूलये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **उत्कूलय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **उदकूलय**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **उदचुकूल**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **उत्कूलया**-ञ्चकार, इ० ॥ म्बभूव इ० ॥ मास, इ० ॥
७ **उत्कूल्या**-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **उत्कूलयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **उत्कूलयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **उदकूलयिष्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

"न प्रादिः०" इति उदो न धात्ववयवत्वम्, समानलोपित्वात् ह्रस्वाभावः सन्वत्कार्याभावश्च। कूलं प्रतीपं गच्छतीति प्रतिकूलयति कूलमनुगच्छतीति अनुकूलयति ॥

कुशलं करोतीति कुशलयति।

## ६९ कुशलि-धातोरूपाणि ॥

१ **कुशलय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **कुशलये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **कुशलय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **अकुशलय**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **अचुकुशल**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **कुशलया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **कुशल्या**-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **कुशलयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **कुशलयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अकुशलयिष्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

समानलोपित्वात् सन्वत्कार्याभावः ॥

बलेन सहते इति बलयति।

## ७० बलि-धातोरूपाणि ॥

१ **बलय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **बलये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **बलय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **अबलय**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **अबबल**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **बलया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **बल्या**-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **बलयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **बलयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अबलयिष्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

समानलोपित्वात् सन्वत्कार्याभावः ॥

बहुलमाचष्टे करोति वा इति वंहयति ।

## ७१ वंहि–धातोरूपाणि ॥

१ **वंहय**–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **वंहये**–त्, ताम्, युः, ः, तम्, त, यम्, व, म ॥
३ **वंहय**–तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **अवंहय**–त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
५ **अववंह**–त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
६ **वंहया**–ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **वंह्या**–त्, स्ताम्, सुः, ः, स्तम्, स्त, सम्, स्व, स्म ॥
८ **वंहयिता**–", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **वंहयिष्य**–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अवंहयिष्य**–त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥

"प्रियस्थिर०" [७, ४, ३८] इति वंह आदेशः ॥

शीलेनाचरतीति शीलयति ।

## ७२ शीलि–धातोरूपाणि ॥

१ **शीलय**–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **शीलये**–त्, ताम्, युः, ः, तम्, त, यम्, व, म ॥
३ **शीलय**–तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **अशीलय**–त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
५ **अशिशील**–त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
६ **शीलया**–ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **शील्या**–त्, स्ताम्, सुः, ः, स्तम्, स्त, सम्, स्व, स्म ॥
८ **शीलयिता**–", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **शीलयिष्य**–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अशीलयिष्य**–त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥

समानलोपित्वात् उपान्त्यह्रस्वाभावः सन्वत्कार्याभावश्च ॥

स्थूलमाचष्टे करोति वा इति स्थवयति ।

## ७३ स्थवि–धातोरूपाणि ॥

१ **स्थवय**–ति, तः, न्ति, सि, थः, थ, ामि, वः, ामः ॥
२ **स्थवये**–त्, ताम्, युः, ः, तम्, त, यम्, व, म ॥
३ **स्थवय**–तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **अस्थवय**–त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
५ **अतुस्थव**–त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
६ **स्थवया**–ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **स्थव्या**–त्, स्ताम्, सुः, ः, स्तम्, स्त, सम्, स्व, स्म ॥
८ **स्थवयिता**–", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **स्थवयिष्य**–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अस्थवयिष्य**–त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥

"स्थूलदूर०" [ ७, ४, ४२ ] इति अन्तस्थादेरंशस्य लुग् नामिनश्च गुणः । णौ यत्कृतमितिन्यायेन स्थूलशब्दस्य द्वित्वादिके अतुस्थवत् ॥

अश्वेनातिक्रामतीति अत्यश्वयति ।

## ७४ अति-अश्वि–धातोरूपाणि ॥

१ **अत्यश्वय**–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **अत्यश्वये**–त्, ताम्, युः, ः, तम्, त, यम्, व, म ॥
३ **अत्याश्वय**–तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **अत्यश्वय**–त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
५ **अत्याशश्व**–त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
६ **अत्यश्वया**–ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **अत्यश्व्या**–त्, स्ताम्, सुः, ः, स्तम्, स्त, सम्, स्व, स्म ॥
८ **अत्यश्वयिता** -", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **अत्यश्वयिष्य**–ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अत्याश्वयिष्य**–त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥

"न प्रादिः०" इति अतेर्न धात्ववयवत्वम्, अद्यतन्याम्–अलोपस्य स्थानिवद्भावेन श्वशब्दस्य द्विर्भावादिके अत्याशश्वत्, तदनङ्गीकारे अत्याशिश्वत् ।

अश्वेन संयुनक्तीति समश्वयति ।

## ७५ सम्-अश्वि-धातोरूपाणि ॥

१ **समश्वय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **समश्वये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **समश्वय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **समाश्वय**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **समाशश्व**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **समश्वया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **समश्व्या**-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **समश्वयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **समश्वयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **समाश्वयिष्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

" न प्रादिः० " इति समो न धात्ववयवत्वम् । अद्यतन्याम् अलोपस्य स्थानिवद्भावेन श्वशब्दस्य द्वित्वादिके समाशश्वत् तदनङ्गीकारे समाशिश्वत् ॥

ह्रस्वमाचष्टे करोति वा इति ह्रसयति ।

## ७६ ह्रसि-धातोरूपाणि ॥

१ **ह्रसय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **ह्रसये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **ह्रसय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **अह्रसय**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **अजह्रस**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **ह्रसया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **ह्रस्या**-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **ह्रसयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **ह्रसयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अह्रसयिष्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

" स्थूलदूर० " [७, ४, ४२] इत्यन्तस्थादेरंशस्य लुग् । समानलोपित्वात् सन्वत्कार्य्याभावः ॥

कृशं तनुमाचष्टे करोति वा इति क्रशयति ।

## ७७ क्रशि-धातोरूपाणि ॥

१ **क्रशय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **क्रशये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **क्रशय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **अक्रशय**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **अचक्रश**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **क्रशया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **क्रश्या**-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **क्रशयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **क्रशयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अक्रशयिष्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

"पृथुमृदु०" [७, ४, ३९] इति ऋकारस्य रः । समानलोपित्वात् सन्वत्कार्य्याभावः ।

भृशमतिशयवन्तमाचष्टे करोति वा इति भ्रशयति ।

## ७८ भ्रशि-धातोरूपाणि ॥

१ **भ्रशय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **भ्रशये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **भ्रशय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **अभ्रशय**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **अबभ्रश**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **भ्रशया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **भ्रश्या** त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **भ्रशयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **भ्रशयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अभ्रशयिष्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

" पृथुमृदु० " [७, ४, ३९] इति ऋकारस्य रः । समानलोपित्वात् सन्वत्कार्य्याभावः ।

पाशं पाशाद्वा विमोचयतीति विपाशयति ।

## ७९ वि-पाशि-धातोरूपाणि ॥

१ विपाशय-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ विपाशये-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ विपाशय-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ व्यपाशय-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ व्यपपाश-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ विपाशया-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ विपाश्या-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ विपाशयिता-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ विपाशयिष्य-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० व्यपाशयिष्य-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

"न प्रादिः०" इति वेर्न धात्ववयवत्वम् । समानलोपित्वात् ह्रस्वाभावः सन्वत्कार्य्याभावश्च ॥

पाशेन संयच्छतीति संपाशयति ।

## ८० सम्-पाशि-धातोरूपाणि ॥

१ संपाशय-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ संपाशये-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ संपाशय-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ समपाशय-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ समपपाश-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ संपाशया-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ संपाश्या-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ संपाशयिता-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ संपाशयिष्य-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० समपाशयिष्य-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

"न प्रादि०" इति न समो धात्ववयवत्वम् । समानलोपित्वात् ह्रस्वाभावः सन्वत्कार्य्याभावश्च ।

वृक्षमाचष्टे रोपयति वा इति वृक्षयति ।

## ८१ वृक्षि-धातोरूपाणि ॥

१ वृक्षय-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ वृक्षये-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ वृक्षय-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ाणि, ाव, ाम ॥
४ अवृक्षय-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ अववृक्ष-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ वृक्षया-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ वृक्ष्या-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ वृक्षयिता-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ वृक्षयिष्य-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० अवृक्षयिष्य-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

सेनया अभियातीति अभिषेणयति ।

## ८२ अभि-षेणि-धातोरूपाणि ॥

१ अभिषेणय-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ अभिषेणये-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ अभिषेणय-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ अभ्यषेणय-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ अभ्यषिषेण-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ अभिषेणया-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ अभिषेण्या-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ अभिषेणयिता-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ अभिषेणयिष्य-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० अभ्यषेणयिष्य-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

"त्र्यन्त्यस्वरादेः" [ ७, ४, ३३ ] इत्यन्त्यस्वरलोपः, समानलोपित्वाच्च उपान्त्य ह्रस्वाभावः सन्वत्कार्य्याभावश्च ।

वीणयोपगायतीति उपवीणयति ।

## ८३ उप-वीणि-धातोरूपाणि ॥

१ **उपवीणय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **उपवीणये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **उपवीणय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **उपावीणय**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **उपाविवीण**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **उपवीणया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **उपवीण्या**-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **उपवीणयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **उपवीणयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **उपावीणयिष्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

"न प्रादिरप्रत्ययः" [ ३, ३, ४ ] इति उपसर्गस्य न धात्ववयवत्वम् । समानलोपित्वात् उपाऽन्त्यह्रस्वाभावः सन्वत्कार्य्याभावश्च ॥

दारुणः खट्वां करोतीति खट्वयति दारु ।

## ८४ खट्वि-धातोरूपाणि ॥

१ **खट्वय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **खट्वये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **खट्वय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **अखट्वय**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **अचखट्व**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **खट्वया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **खट्व्या**-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **खट्वयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **खट्वयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अखट्वयिष्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

तुलां रोपयतीति तुलयति कनकम् ।

## ८५ तुलि-धातोरूपाणि ॥

१ **तुलय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **तुलये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **तुलय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **अतुलय**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **अतुतुल**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **तुलया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **तुल्या**-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **तुलयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **तुलयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अतुलयिष्य**-त्, ताम्, न्, :. तम्, त, म्, ाव, ाम ॥

"त्र्यन्त्यस्वरादेः" [७, ४, ४३] इत्यन्त्यस्वरादिलोपः समानलोपित्वाच्च ह्रस्वाभावः सन्वत्कार्य्याभावश्च ॥

असिना छिनत्तीति असयति ।

## ८६ असि-धातोरूपाणि ॥

१ **असय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **असये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **असय**-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव ाम ॥
४ **आसय**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **आसिस**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **असया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **अस्या**-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **असयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **असयिष्य**-ति, तः, न्ति. सि, थः, थ, ामि, ावः, ामः ॥
१० **आसयिष्य**-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

इं काममाचष्टे इति । आययति ।

## ८७ आयि-धातोरूपाणि ॥

१ **आयय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **आययें**-त्, ताम्, युः, ः, तम्, त, यम्, व, म ॥
३ **आयय-तु**, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **आयय**-त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
५ **आयियि**-त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
६ **आयया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **आय्या**-त्, स्ताम्, सुः, ः, स्तम्, स्त, सम्, स्व, स्म ॥
८ **आययिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **आययिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **आययिष्य**-त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥

मतान्तरे ५ आयय-त् । " नामिनोऽकलिहलेः " इत्यत्र कलिहलिवर्जनान्नाम्नोऽपि वृद्धिः ॥

कलिं गृह्णातीति कलयति ।

## ८८ कलि-धातोरूपाणि ॥

१ **कलय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **कलये**-त्, ताम्, युः, ः, तम्, त, यम्, व, म ॥
३ **कलय-तु**, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **अकलय**-त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
५ **अचकल**-त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
६ **कलया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **कल्या**-त्, स्ताम्, सुः, ः, स्तम्, स्त, सम्, स्व, स्म ॥
८ **कलयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **कलयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अकलयिष्य**-त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥

" नामिनोऽकलि० " [ ४, ३, ५१ ] इत्यत्र कलिवर्जनान्न वृद्धिः । एवं समानलोपित्वान्न सन्वत्कार्यम् । कलिशब्दो बिभीतकवृक्षे विवादे युद्धे शूरे अन्त्ययुगे कोरके च वर्तते ॥

वास्या कुठारविशेषेण छिनत्तीति वासयति ।

## ८९ वासि-धातोरूपाणि ॥

१ **वासय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **वासये**-त्, ताम्, युः, ः, तम्, त, यम्, व, म ॥
३ **वासय-तु**, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **अवासय**-त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
५ **अवीवस**-त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
६ **वासया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **वास्या**-त्, स्ताम्, सुः, ः, स्तम्, स्त, सम्, स्व, स्म ॥
८ **वासयिता**-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **वासयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अवासयिष्य**-त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥

" नामिनोऽकलि० " [ ४, ३, ५१ ] अत्र कलिहलिवर्जनान्नाम्नोऽपि वृद्धयां पश्चाल्लोपे उपान्त्यह्रस्वे सन्वत्कार्ये सति अवीवसत् । स्वरस्येति स्थानिवद्भावो न तस्यानित्यत्वात् मतान्तरे ५ अववास-त् ॥

हलिं महद्धलं गृह्णातीति हलयति ।

## ९० हलि-धातोरूपाणि ॥

१ **हलय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **हलये**-त्, ताम्, युः, ः, तम्, त, यम्, व, म ॥
३ **हलय-तु**, तात् ताम्, न्तु, ", तात्, तम्, त, ानि ाव, ाम ॥
४ **अहलय**-त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
५ **अजहल**-त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥
६ **हलया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **हल्या**-त्, स्ताम्, सुः, ः, स्तम्, स्त, सम्, स्व, स्म ॥
८ **हलयिता**-", रो, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **हलयिष्य**-ति, तः, न्तिः, सि, थः, थ, ामि, ावः, ामः ॥
१० **अहलयिष्य**-त्, ताम्, न्, ः, तम्, त, म्, ाव, ाम ॥

" नामिनोऽकलि० " [ ४, ३, ५१ ] इत्यत्र हलिवर्जनान्न वृद्धिः, समानलोपित्वाच्च सन्वत्कार्याभावः ।

ई लक्ष्मीमाचष्टे इति आययति ।

## ९१ आयि-धातोरूपाणि ॥

१ **आयय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **आययेत्**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **आयय-तु**, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **आयय-त्**, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **आयिय-त्**, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **आयया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **आय्या-त्**, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **आययिता-**", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **आययिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **आययिष्य-त्**, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

मतान्तरे ५० आयय-त् ।

ऊर्वीमाचष्टे इति वरयति ।

## ९२ वरि-धातोरूपाणि ॥

१ **वरय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **वरये-त्**, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **वरय-तु**, तात्, ताम्, न्तु, ", तात्, तम्, त, ाणि, ाव, ाम ॥
४ **अवरय-त्**, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **अवीवर-त्**, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **वरया-**ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **वर्या-त्**, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **वरयिता-**", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **वरयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **अवरयिष्य-त्**, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

" प्रियस्थिर० " [ ७, ४, ३८ ] इति नामग्रहणे लिङ्गविशिष्टस्यापिग्रहणात् ' वर् ' आदेशः, मतान्तरे वारयतीत्यादि ॥

ऋज्वीमाचष्टे ।

## ९३ ऋजि-धातोरूपाणि ॥

१ **ऋजय**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
२ **ऋजये**-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **ऋजय-तु**, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **आर्जय-त्**, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **आर्जिज-त्**, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **ऋजया**-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **ऋज्या-त्**, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **ऋजयिता-**", रौ, रः, सि, स्थः, स्थ, स्मि, स्व,: स्मः ॥
९ **ऋजयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **आर्जयिष्य-त्**, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

" जातिश्च णि० " [ ३, २, ५१ ] इति पुंवत्त्वे अन्त्यस्वरलोपे च ऋजयति ।

एनीमाचष्टे इति एतयति ।

## ९४ एति-धातोरूपाणि ॥

१ **एतय**-ति, तः, न्ति, सि, थः, थ, मि, ावः, ामः ॥
२ **एतये-त्**, ताम्, युः, :, तम्, त, यम्, व, म ॥
३ **एतय-तु**, तात्, ताम्, न्तु, ", तात्, तम्, त, ानि, ाव, ाम ॥
४ **ऐतय-त्**, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
५ **ऐतत-त्**, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥
६ **एतया-**ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥
७ **एत्या-त्**, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥
८ **एतयिता-**", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥
९ **एतयिष्य**-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥
१० **ऐतयिष्य-त्**, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

मतान्तरे ५ ऐतित-त् । " जातिश्च णि० " [ ३, २, ५१ ] इति पुंवत्त्वे एत इति प्रकृतेरन्त्यस्वरलोपे एतयति ॥

